वहति महिलामाद्यो वेधास्त्रयीमुखरैर्मुखै
र्वरतनुतया वामो भागश्शिवस्य विवर्त्तते ।
तदपि परमं तत्वं गोपीजनस्य वशंवदं
मदनकदनैर्न क्लिश्यन्ते कथन्न्वितरे जनाः ॥ ३६ ॥

कामः—साधु वसन्त साधु । कालानुरूपवादो खल्वसि ।

विश्वं युवतिसात्कर्तुं भवता दत्तसायके ।
विवेकः किन्नु वर्तेत विपक्षे मयि संस्थिते ॥ ३७ ॥

रतिः—*अय्य उत्त एव्वंएदं तहवि विसमत्थिरसंठाणवेरग दुग्गपइ ठ्ठिओ अप्पमत्तेहिं समदमप्पमुहेहिं अमच्चेहिं अभिरक्खिओ सओ अस हाअसूरो अणवाअ साहसोअ विपक्खो किएणाम कइआकाहित्तित्ति कलु सि अहि ययह्मि ।

---

* आर्यपुत्र एवमेतत् तथापि विषमस्थिरसंस्थानवैराग्यदुर्गप्रतिष्टितोऽप्रमत्तैश्शमदमप्रमुखैरमात्यैरभिरक्षितः स्वयमसहायशूरोऽनपायसाहसश्च विपक्षः किनाम कदा करिष्यतीति कलुषितहृदयास्मि

---

वहतीति—॥ आद्यो वेधा इति दक्षादिव्यावृत्तिः महिलां स्त्रियं सरस्वतीमित्यर्थः । त्रय्या वेदत्रयेण मुखरैः शब्दायमानैः मुखैस्सर्ववेदाध्ययनपरैर्वदनैर्वहति धत्ते वेदानामपि सरस्वतीत्वात् शिवस्य परिशुद्धतया प्रसिद्धस्य वामो भागः वरतनुतया स्त्रीत्वेन विवर्त्तते परिणमते । अर्धनारीनरवपुरिति स प्रसिद्धः । तत् वेदान्तप्रसिद्धं परमं तत्वं । भगवान्नारायणः तत्वं नारायणः परः । इति हि श्रूयते । गोपीजनस्य वशं वदं अधीनं । ननु गोपीजनवशंवदत्वं कृष्णस्य किल । तत्कथं नारायणस्येत्युच्यते नारायणस्यैव कृष्णात्वेनावतारात् । एवं हि स्मर्यते ।

एषनारायणश्श्रीमान् क्षीरार्णवनिकेतनः ।
नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीं ॥ ३६ ॥

कालस्य समयस्य अनुरूपं अनुगुणं वक्तुं शीलमस्यास्तीति अनुरूपवादी ।

विश्वमिति—॥ युवतिसात्कर्तुं युवत्यधीनं कर्तुं मयि संस्थिते सम्यक् स्थिते विवेकः किंनु वर्तेत न वर्तेतेत्यर्थः ॥ ३७ ॥

पुनरपि स्वहृदयकालुष्यं सचेतुं चाह—आर्येत्यादि । विषमं दुराक्रमं स्थिरसंस्थानं दृढसंस्थानं च यद्वैराग्यमेव दुर्गं तस्मिन्प्रतिष्ठितमनपायमपायरहितं साहसं यस्य स तथा किं नाम कृत्यं कदाकस्मिंश्चित्समये ।

कामः—अयि भीरु अलमतिशङ्कया नूनं विपक्षपक्षपातिबालिशजनविप्रलब्धा स्वयूथ्यवैभवं न निर्धारयसि । पश्यतावत् विश्वविजयिनस्त्वत्प्रयस्यमे जगत्त्रयप्रसिद्धजैत्रमुपकरणम् ।

वपुरप्रतिमं नितंबिनीनां
दृढसौन्दर्यगुणं दरावनम्रम् ।
श्रवणावधि नेत्रचित्रपुंखं
धनुराद्यं मम मुष्टिमेयमध्यम् ॥ ३८ ॥

अपि च ।

शैलीं विलोपयति शान्तिमधः करोति
व्रीडां व्युदस्यति विरक्तिमपह्नुते च
कर्णामृतं किमपि तत्कलभाषिणीनां
नामापि किं न विकरोति निशम्यमानम् ॥ ३९॥

वसन्तः—ननु कैमुतिकमेतत्, यदिदं योषितां यदृच्छाकीर्तनश्रवणादिकमपि चित्तसंक्षोभहेतुरिति ।

तिष्ठतु गुणावमर्शः
स्त्रीणामालोकनादिभिस्सार्धम् ।
दोषानुचिन्तनार्था
स्मृतिरपि दूरीकरोति वैराग्यम् ॥ ४० ॥

---

विपक्षे पक्षपाती सादरः यो बालिशजनः मूर्खजनः तेन विप्रलब्धा वञ्चिता तदुपकरणं किमित्यत आह ।

वपुरिति—॥ अप्रतिमं सदृशवस्त्वन्तररहितं दृढं स्थिरं यत्सौन्दर्यं तदेव गुणः ज्या यस्य तत्तथोक्तं दरमल्पमवनम्रमवनतं श्रवणं श्रोत्रमवधिस्सीमा यस्य तत्तथा दीर्घमित्यर्थः यन्नेत्रं तदेव चित्रः अद्भुतः पुंखः बाणो यस्य तत्तथोक्तं मुष्टिनामेयं मध्यं यस्य तत्तथा । नितंबिनीनां वपुः मम आद्यं आयुधेषु प्रधानं धनुः वपुस्तिष्ठति ॥ ३८ ॥

नामापि विकार हेतुरित्याह ।

शैलीमिति—॥ शैलीं स्वभावं विलोपयति नाशयति व्युदस्यति उन्मूलयति अपह्नुते तिरस्करोति । कर्णयोरमृतं अमृतवदानन्दावहं किमपि अनिर्वचनीयं तत्प्रसिद्धं कलभाषिणीनां निशम्यमानं श्रूयमाणं नामापि न विकरोति किं विकरोत्येवेत्यर्थः ॥ ३९ ॥

कैमुतिकं किमुतेति न्यायसिद्धं ।

तिष्ठत्विति—॥ गुणानां सौन्दर्यसौशील्यादीनां अवमर्शः विचिन्तनं आलोकनादिभिस्सार्धं तिष्ठतु । दोषाणां दौर्जन्यादीनां अनुचिन्तनं अर्थःप्रयोजनं यस्यास्सा तथा स्मृतिस्स्मरणमपि वैराग्यं दूरीकरोति दूरेवर्त्तमानं करोति ॥ ४० ॥

अपि च प्रभूतमदमेदुरात्मनो
विषयाटवीषु विविधासु धावतः ।
स्वबलेन हन्त मनसो निवर्तनं
बिसतन्तुनेव सुरदन्तियन्त्रणम् ॥ ४१ ॥

रतिः- *अय्यउत्त दिढभूमिविब्भमसमुम्मूलणक्खमाणं जोईसराणं दिट्ठिं परिहरंतेण तुए परक्कमणिज्जं

कामः- [विहस्य] प्रिये पश्यामि चक्षुष्मती चेतस्यपि ज्ञातयं योजयामि खल्वहं योगीश्वरानपि युवतियोगीश्वरपादे ।

सुभगपरुषैर्मदस्त्रैः
कीलितमन्योन्यकवचितैकार्धं ।
किन्न विदितं भवत्या
किमपि मिथस्स्यूतजीवितं मिथुनम् ॥ ४२ ॥

* आर्यपुत्र दृढभूमिविभ्रमसमुन्मूलनक्षमाणां योगीश्वराणां दृष्टिं परिहरता त्वया पराक्रमणीयम् ।

चञ्चलं हि मनःकृष्ण प्रमाथिबलवद्दृढं ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करं ॥

इत्युक्तरीत्या चित्तनियमनमशक्यमित्याह ।

**अपि चेति-॥** प्रभूतः अधिकः स चासौ मदश्च तेन मेदुरः मिश्रः आत्मा स्वरूपं यस्य । विविधासु विषयाश्शब्दादयः ते एवाटव्यः तासु धावतः मनसः स्वबलेन निवर्त्तनं बिसतन्तुना बिसान्तर्वर्त्तितन्तुना सुरदन्तिनः ऐरावतस्य यन्त्रणं बन्धनमिव । हन्तेत्यसंभावितत्वं द्योतयति । जितचित्तानां समीपेन प्रभवति ते पराक्रम इति निश्चिनोमि ॥ ४१ ॥

दृढभूमयः स्थिरतरस्थानाः विभ्रमाः तेषां समुन्मूलने क्षमाणां । युवतय एव योगिनः तेषामीश्वरः प्रधानभूतः तस्य पादे योजयामि तत्वं जानास्येवेत्याह ।

**सुभगेति-॥** सुभगत्वे भोग्यत्वेपि परुषैः पुष्पतया सुभगत्वं बाधकत्वात्परुषत्वं च मदस्त्रैः मत्सायकैः कीलितं निघातकीलं अत एवान्योन्यं कवचितं सञ्जातकवचं एकैकार्धं मिथः परस्परं स्यूतं संबद्धं जीवितं यस्य तत्तया किमपि मिथुनं ॥ ४२ ॥

रतिः—*अय्यउत्त, अवहारिअं मए तुह माहप्पं दाणिं उण दीह बुद्धि-बलेण देव्वदिण्णहथ्थेण जमणिअमप्पमुहबहुसहाअसंपण्णेण अहं डुच्चा-हप्पहुत्तणमंतसत्तिणा सत्तुणा काहे किं होज्जत्ति पबलपवणाहअ कअलिएव्व तरलअरह्मि पसिद्धं खु पण्णाबलं मोक्खपेरं ताणं अइदुक्क-राणं सिद्धीणं साहणंति।

कामः—[सरोषहासं] अयि मुग्धे मञ्जुभाषिणि गुञ्जन्मधुकरशिञ्जिनी संहितविश्वलक्ष्यविषमविशिखस्य नित्यविजयजागरूकस्य त्वत्प्रियस्य मे सन्निधौ का पुनः प्रज्ञा। केन वा कस्य मुक्तिर्भविनी किमिति नाम मध्य इव भवत्या मानसेऽपि सौक्ष्म्यन्नालक्ष्यते। [विहस्य] प्रिये हन्त विदितमेतत् नूनमिदानीं स्तनगतं स्थौल्यमेतदन्तरापि संक्रान्तमिति। अथवा। अविचारितरमणीयमबलाजनस्वाभाव्यं भवत्यामपि वर्तते संपश्यतां भवती।

मयादिष्टः क्रोधः प्रथयति किमप्यान्ध्यमथच
स्मृतिभ्रंशस्सेद्धा विघटयति बुद्धिं सपदि सः।
तया मुक्तः क्षेत्री तमसि गहने विन्दति लयं
तथाभूते किं वा जनयति विवेको जडमतिः॥ ४३॥

* आर्यपुत्र अवधारितं मया तव माहात्म्यं इदानीं पुनः दीर्घबुद्धिबलेन देवदत्तहस्तेन यमनियमप्रमुखबहुसहायसंपन्नेन अखण्डोत्साहप्रभुत्वमन्त्रशक्तिना शत्रुणा कदा किं भवेदिति प्रबलपवनाहताकदलिकेव तरलतरास्मि। प्रसिद्धं खलु प्रज्ञाबलं मोक्षपर्यन्तानामतिदुष्कराणां सिद्धीनां साधनमिति।

रोषश्च हासश्च रोषहासौ ताभ्यां सहितं यथा भवति तथा मधुकरमय्यां शिञ्जिन्यां संहिताः विश्वं लक्ष्यं येषां ते तथा विषमाश्च विशिखाश्शरा यस्य तस्य मानसे बुद्धावित्यर्थः। स्थौल्यस्य हेतुमाह प्रियेति। अविचारितरमणीयं अविचारितत्वे रमणीयं अबलास्वाभाव्यं स्त्रीस्वभाव इत्यर्थः। संपश्यतां विवेकपराभवप्रकारमिति शेषः।

मयेति—॥ मया आदिष्टः प्रेरितो क्रोधः किमप्यान्ध्यं कृत्याकृत्यविवेकशून्यतां प्रथयति अथ च स्मृतिभ्रंशस्सेद्धा सेत्स्यति सः बुद्धिं विघटयति शिथिलयति। तया बुद्ध्या मुक्तः क्षेत्री जीवः गहने तमसि लयं विन्दति। तस्मिन्जीवे तथाभूते मोहं गते सति विवेकः किं जनयति न किंचिदपि कर्तुं शक्नुयादित्यर्थः गीतं ह्येतद्भगवता।

तदेवमसह्यवेगमस्मद्व्यूहं विवेकामात्याश्शमदमादयो न प्रसहिष्यन्ते । स्वयञ्च दुर्जयो निखिलसुरासुरकोटीरविन्यस्तवामपादो महामोहः । नहि तरक्षुर्मृगराजस्य परिपन्थी ।

परस्य पुरुषस्येव पञ्चभिश्च ममायुधैः ।
समयेषु विमथ्यन्ते सत्ववन्तोपि शत्रवः ॥ ४४ ॥

अपि च ।

अलमिह विबुधाद्यैरागमग्राह्यवाचो
मुनिपरिषदि धर्मान् गायतो मुक्तिहेतून् ।
तपसि नियतवृत्तेस्तस्य देवस्य शान्तिं
जनितयुवतिरत्नं दर्शयत्यूरुकाण्डम् ॥ ४५ ॥

रतिः–* अय्यउत्त संभावेमि सच्चं तु हभासिअं । अब्बह्मकीडं अप्पडिहअं खु तुह माहप्पं । एदं उण अण्णाअपुव्वं आणवेदु अय्यउत्तो ।

कामः–किन्तत्

रतिः–† विवेअप्पहुदीणं महामोहप्पहुदीणं अमिअन्दमाअंदाणं विअ किण्णिमित्तं वेरन्ति ।

* आर्यपुत्र संभावयामि सत्यन्तव भाषितं । आब्रह्मकीटमप्रतिहतं खलु तव माहात्म्यं । एतत्पुनरज्ञातपूर्वमाज्ञापयत्वार्यपुत्रः ।

† विवेकप्रभृतीनां महामोहप्रभृतीनां च मृगेन्द्रमातङ्गानामिव किन्निमित्तं वैरमिति

संगात्संजायते कामः कामात्क्रोधोभिजायते ।
क्रोधाद्भवति संमोहस्संमोहात्स्मृतिविभ्रमः ॥
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति । इति ॥ ४३ ॥

अस्मद्व्यूहं अस्माकं सेनानिवेशविशेषं । तरक्षुः व्याघ्रः ।

परस्येति–॥ सत्ववन्तः बलवन्तः सत्वगुणनिष्ठा अपि ॥ ४४ ॥

देवास्तिष्ठन्तु ।
साक्षान्नारायणोपि शान्तिविधुर इत्याह ।

अलमिति–॥ इह लोके विबुधाद्यैः विबुधाश्चतुर्मुखप्रभृतयः आद्यशब्देन सनकादयो गृह्यन्ते तैरलं तेतिष्ठन्तु आगमैः वेदैः ग्राह्याः ग्रहीतुं योग्याः वाचो यस्य तस्य । मुनीनां परिषदि मुक्तिहेतून् धर्मान् गायतः । तस्येति प्रसिद्धिद्योतिका देवस्य नारायणस्य जनितं युवतिरत्नं येन तत् ऊरुकाण्डं ऊरुदण्डः । काण्डोस्त्रीदण्डबाणार्ववर्गावसरवारिष्विति निघण्टोः काण्डशब्दस्य नपुंसकत्वमप्यस्ति शान्तिं दर्शयति । ऊर्वशीजनको नारायणस्योरुरेव तस्य शान्त्यभावं प्रकटयतीतो भावः ॥ ४५ ॥

कामः–प्रिये आकर्ण्यतामिदमादितः प्रभृति ।

त्रिगुणघटितात्पुंसो बुद्धिस्सती तदनुव्रता
समयनियतोच्छ्रायस्त्रेधाकुलं समजीजनत् ।
प्रथममिह तद्भोगद्वेष्यं विवेकपुरस्सरं
द्वितयमितरज्जुष्टं रागप्रमोहमुखं मिथः ॥ ४६ ॥

अत्र विवेकश्च महामोहश्च समानशीलाभिः प्रकृतिभिरभिषिक्तौ राजन्यौ । तयोरपि ।

मोहस्य धर्मपत्नी दुर्मतिरपवर्गदोषदृष्टिमयी ।
विषयरसदोषदृष्टिस्सुमतिरनन्या विवेकस्य ॥ ४७ ॥

---

एवं कामवाक्यमशेषं सत्यं मन्यमाना रतिः सा उभयोर्विवेकमोहयोः वैरकारणं पृच्छति । मध्ये कामः प्रश्नमुपक्षिपति किं तदिति किंनिमित्तं वैरमिति पृच्छन्त्या देव्यास्तयोर्वैरनिमित्तं सम्यक् ज्ञापयितुं जन्मप्रभृति सर्वं ज्ञापयितुकामस्तां संबोधयति प्रियेति ।

त्रिगुणेति–॥ त्रिगुणघटितात् सत्वरजस्तमोरूपगुणत्रययुक्तात् । सर्वस्यापि गुणत्रययुक्तमस्ति । गीयते हि भगवता ।

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात्त्रिभिर्गुणैः । इति ॥

भोक्तुः जीवात्पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते । इति हि स्मर्यते तदनुव्रता तं पुरुषं अनुगता सती साध्वी बुद्धिः समयेषु स्वावसरेषु नियतः व्यवस्थित उच्छ्रायः उन्मेषो यस्य तत् कुलं त्रेधा त्रिप्रकारेण समजीजनत् सम्यक् जनयामास त्रेधेत्युक्तं तत्र किमाद्यं के वापरे इत्याकांक्षायामाह प्रथमेति । भोगद्वेष्यं शत्रुभूतं विवेकः पुरस्सरः अग्रयायी यस्य तत् । विवेकपुरस्सरं तत्प्रसिद्धं । इह कुलत्रये प्रथमम् आद्यं । रागः कामः प्रमोहः महामोहः तौ प्रमुखे निर्वाहकौ ययोस्तत् रागप्रमोहमुखं मिथः परस्परं जुष्टं संयुक्तं द्वितयं कुलद्वयं । इतरत् रागप्रमोहमुखमित्यनेनास्य कुलस्य रजस्तमः प्रचुरत्वं सूच्यते । भोगद्वेष्यमित्यनेन तस्य सत्वनिष्ठत्वं च ॥ ४६ ॥

समानं शीलं स्वभावो यासां ताभिः राजन्यौ राजानौ । अथैतयोः पत्न्यावाह

मोहस्येति–॥ अपवर्गे मोक्षे दोषतया दृष्टिर्दर्शनं तन्मयी तत्स्वरूपा अर्शोमयी जुहुरितिवत् । विषयाश्शब्दस्पर्शादयः तदनुभवेन योरसः तस्मिन् दोषाया दृष्टिर्यस्यास्सा तथोक्ता सुमतिः विवेकस्यानन्या पृथक्सिद्धापत्नीत्यर्थः ॥ ४७ ॥

रतिः- *तदोतदो ।

कामः–ततश्च रजःप्रधाना रागादयः तमःप्रसूते स्वसंसारचक्रव- र्तिनो महामोहस्य दैत्यानुकूलरक्षःकुलन्यायेन साचिव्यमाचरन्ति । सत्वसंभवन्तु विवेककुलमसाहयमल्पसारञ्च जगति वर्तते । जनकश्चा- स्माकं तेजज्ञः स्वयं मध्यस्थस्वभावोपि सहधर्मचारिण्या देव्या बुद्ध्यास- हाद्य यावदस्मासु बहुलं दत्तदृष्टिः । तदिदमसहमानानित्यनृशंसाविवे- कादयः जातिवादिन इव स्वभङ्गमप्यनुमन्यमानाः पुरुषस्य भोगं तत्सं- वर्धकानस्मांश्च उत्सादयितुमीहन्ते । अस्मत्तातेन चानादिभुक्तायां प्रकृतौ विविधान् दोषानुद्घाट्य तातं च तस्यामुपजनितवैराग्यं केनचिदुपायेन विरचय्य महाप्रस्थानेनापुनरावर्तिनं कर्तुमारभन्ते । तथा मर्कटरक्षः पती महापातकिनौ सुग्रीवविभीषणौ स्वकुलोत्सादने प्रमाणयन्ति । न च तदारंभसमये तातस्य दुर्दशाशङ्कया वर्णयतुं । अयं खलु ।

---

* ततस्ततः

---

रतिः कथाश्रवणे प्रीतिं द्योतयति ततस्तत इति । विवेकमोहौ द्वावपि राजानावभिषिक्तौ अन्यद्रागाद्यं कुलं कथमासीदित्यत आह ।

रजःप्रधाना इति–॥ रागमोहकुलयोस्तुल्यत्वेन कथमनयोरेकस्य प्राधान्यं इत्यस्य गुणभाव इत्यत्राह दैत्येति–॥ द्वयोरनयोः कुलयोरन्योन्यसौहार्दात् बल- वत्वं अन्यस्य त्वल्पबलत्वमेवेत्याह सत्वसंभवमिति ॥ तु शब्देन व्यावृत्तिर्द्योत्यते । एवं जनकः पुरुषः किं करोतीत्यत्राह जनक इति । मध्यस्थस्साधारणस्वभावो यस्य स तथा । अद्य यावत् एतत्त्वणावधि । जातिवादिनः व्यक्तिषु जातिर्नाम काचिद- स्तीति वदन्तः त इव स्वभंगं स्वनाशमप्यनुमन्यमाना अभ्युपयन्तः ईहन्ते इच्छन्ति । इच्छामात्रमेव न तत्फलसिद्धिरित्यभिप्रायः । महाप्रस्थानं महाप्रयासं देहत्याग इत्यर्थः तेन आवर्तः आवृत्तिः आवर्तो अस्यास्तीत्यावृत्तो पुनरावर्तो न भवतीत्यपुनरा- वर्त्ती तं कर्तुं आरभन्ते । एवं स्वकुलध्वंसं केवा कुर्वन्तीत्यत आह ॥

तथेति–॥ प्रकृतिस्स्वभावः । मर्कट प्रकृतिः रक्षःप्रकृतिश्च सुग्रीव विभीषणा- वित्यर्थः । स्वकुलोत्सादनात् महापातकिनावित्युच्यते प्रमाणयन्ति प्रमाणीकुर्वन्ति कावादुर्दशेत्यत आहायं खल्विति ॥

जात्यन्धः परदोषदृष्टिषु परीवादेषु मूकाग्रणीः
बाधर्यं प्रथमावतारसरणि र्निन्दासमाकर्णने ।
स्त्रीप्रायः परदारसङ्ग्रहविधौ तद्वत्परावर्जने
संपद्येत समीक्षणेऽपि विकलः पापैर्विवेकादिभिः ॥४८॥

अत एवास्माभिरपि परित्यक्तसौभ्रात्रैः तेऽपि दुरात्मानो जिघांसन्ते । ततः प्रवृत्तिनिवृत्तिपद्धती समाश्रित्य वयं च तेच संयतिष्यामहे । तदा तु सत्वप्रधानं कुलं ज्योतिरिङ्गणज्योतिरिव द्युमणिकिरणैरस्माभिरभिभूयते ।

सौहार्दमित्थमनवाप्य सहोदराणा-
मासीत् स्वमूलगुणभेदवशाद्विरोधः ।
एकप्रजापतिभुवामपि वैरबन्धः
स्वात्मावधिः स्वयमुदेति सुरासुराणाम् ॥ ४६ ॥

रतिः— *संतं पावं संतं पावं पुत्ता एव्व पिदुणोभोअं विणासंति तह कहं सो अरा एव्व इअरे अरविंधं सणलं पड्हि अआ होंति णाह किं णहोंज ताणं तुम्हाणंवि समरदुंदसा णिव रण साहणं संधि ।

* शान्तं पापं शान्तं पापं पुत्रा एव पितुर्भोगं विनाशयन्ति तथा कथं सोदरा एव इतरेतरविध्वंसनलंपटहृदया भवन्ति नाथ किंन भवेत्तेषां युष्माकमपि समरदुर्दशानिवारणसाधनं सन्धिः

जातीति—॥ परेषां ये दोषाः तेषां दृष्टिषु दर्शनेषु जात्यन्धः जातिर्जन्म तस्मिन्नन्धः जायमानदशायामेवान्धः । अनेन परदोषदर्शनमस्य न कदाचित्संभवतीति द्योत्यते । परिवादाः परदोषकथनानि तेषु मूकानामग्रणीः श्रेष्ठः । निन्दानां परदूषणानां समाकर्णने बाधर्यं बधिरत्वं तस्य प्रथमावतारः प्रथमप्रवेशः तस्य सरणिर्मार्गः । परेषां दाराः परदाराः तेषां संगमविधौ संभोगक्रियायां स्त्रीप्रायः स्त्रीतुल्यः परेषामावर्जने वशीकारे तद्वत् स्त्रीवत् असमर्थः इत्यर्थः । समीक्षणे समीचीने सम्यग्विचारे विकलः विवेचनोपयोगिज्ञानशून्यः संपद्येत स्यात् ॥ ४८ ॥

अत एव पितृद्रोहादेव जिघांसन्ते हन्तुमिष्टा भवन्ति प्रवृत्तिनिवृत्तिपद्धती प्रवृत्तिनिवृत्तिरूपमार्गौ प्रवृत्तिनिवृत्तिधर्मावित्यर्थः । ज्योतिरिंगणस्य खद्योतस्यज्योतिः तेज इव द्युमणिस्सूर्यस्तस्य किरणैः ।

अहो कथं भ्रातर एव परस्परं जिघांसन्तीत्यत्राह ।

सौहार्दमिति—॥ स्वमूलभूतानां गुणानां सत्वादीनां भेदवशादित्यं विरोध आसीत् । एवं कुत्र दृष्टमित्यत्राह एकेति—॥ अत्र प्रजापतिः काश्यपः स्वात्मावधिः यावदात्मभावीत्यर्थः ॥ ४६ ॥

कामः—मुग्धे कथञ्चिदपि नात्र सन्धिस्संभाव्यते ।

**स्वतस्सत्त्वविहीनानां सत्तयैवापराध्यतः ।**
**कथङ्कारं प्रतीकारः कल्पकोटिशतैरपि ॥ ५० ॥**

**प्रतिपुरुषविभक्तमूर्तिभेदा**
**वयमितरे च मिथः प्रतीपवृत्ताः ।**
**क्वचिदधिकरणे समापतन्तः**
**सुतनुदधीमहि वध्यघातकत्वम् ॥ ५१ ॥**

नखल्वर्थकामपराणामस्माकं नारायणपरायणैः कथायामपि सङ्गतिरुपपद्यते । किञ्च यथा कथञ्चिदुपपद्यमानमपि अखण्ड वैरिखण्डनपण्डितो महामोहः कथञ्चिदपि सन्धिचानुमन्यते । अहं वा कथमसहायवीरस्तमनुमन्ये न खलु क्षुधितोऽपि शार्दूलः कदाचिदपि शाड्वलमत्ति·

---

एतदाकर्णनेन सञ्जातखेदा रतिरेषां सन्धिर्भवेदिति पृच्छति । शान्तं पापं एवंविधाविरोधहेतुभूतं पापं शान्तं भवत्विति शेषः । आदराद्वीप्सा ।

स्वत इति—॥ स्वतः स्वभावात् सत्वविहीनानां सत्तयैवापराध्यतः सत्भावेनैवापराधं कुर्वतो वर्त्तमानस्य कल्पानां ब्रह्मदिनानां कोटिशतैरपि प्रतीकार· प्रतिक्रिया कथंकारं कथं वा कर्तुं शक्यः ।

स्वतो दुर्बलाविवेकादयः स्वसत्तयैव पीडाकरस्यास्मद्ग्रहस्य कथमपि न प्रतीकारं कर्तुं शक्नुयुरितिभावः ॥ ५० ॥

विरुद्धानामस्माकमेकाधिकरण्यं हन्तृहन्तव्यताहेतुरित्याह ॥

प्रतिपुरुषेति—॥ प्रतिपुरुषं तत्तत्पुरुषेषु विभक्तानियता मूर्त्तिभेदाश्शरीरविशेषा येषां ते तथोक्ताः वयं मोहप्रभृतयः इतरे विवेकादयश्च क्वचिदधिकरणेऽकस्मिन्पुरुषरूपे स्थाने समापतन्तः सम्मिलिताः मिथः प्रतीपं विरुद्धं वृत्तं व्यापारो येषां ते तथा तादृशास्सन्तः वध्यघातकत्वं वध्यत्वं घातकत्वं च दधीमहि दध्महे ॥ ५१ ।

अद्यप्रभृति ये लोका यूयं यूयं वयं वयं ।
अर्थकामपरा यूयं नारायणपरा वयं ॥
नास्ति संगतिरस्माकं युष्माकं च परस्परं ।
वयन्तु किंकरा विष्णोर्यूयमिन्द्रियकिंकराः ॥

इत्युक्तरीत्या च तेषामस्माकं च संगतिर्न सम्भवतीत्याह । न खल्विति—कथायामपि स्वैरप्रसङ्गेऽपीत्यर्थः ।

रतिः—*कोउण तेहिं कुलं घेहिं महाबलाणं तुम्हाणं वि उम्मूलणे उवाओ संमंतिओ

कामः—अयि भीरु अनुद्घाटनीयमिदं राजरहस्यं विशेषतः स्त्रीषु

रतिः—†[हस्तं संगृह्य] अय्यउत्त साविओऽसि मए पिअसहेण वसंतेण अ सच्चं विवरिअउ राअरहस्सं

वसन्तः—[स्वगतं] किमत्र विवरणीयं दुष्परिहारः खलु अनिर्धारितकालो नियतिविपर्यासः [प्रकाशं] सखे मकरध्वज।

मनोरथसमर्थानां महामोहविरोधिनाम्।
मन्त्रभेदनमस्माभिः कार्यं तत्परिपन्थिभिः ॥ ५२ ॥

कामः—प्रिये कथयामि तर्हि। अस्ति खलु अनभिज्ञकुलसार्वभौमविवेकमूलाकर्तृत्वाभिमानादिनानाविधविषमदृष्टिसहकृतः कश्चिदस्मत्कुलाभिचारकांक्षिभिः उपनिषद्दर्शननिष्ठैः कैश्चिन्निष्ठुरैः अनुष्ठीयमानो निवृत्तिसंज्ञको धर्मः। यच्चिष्ठस्य पुरुषस्य परदोषदर्शनादिष्वन्धबधिरषण्डपङ्गुमूकादिवदत्यन्तमवसन्नावस्थानमाकर्ण्यते। तेन च निष्कृतिक्रियेण केनचिदवग्रहेणेव पुरुषमाविशता बुद्धिस्सङ्गंस्यते। तस्मात् किल तत्सङ्गमादस्मत्कुलप्रद्वेषदूषितहृदया प्रशान्तमधुरवेषप्रच्छन्नाभयदरसभोगभीमरयी परमस्यपरपर्याया ब्रह्मराक्षसी प्रादुर्भविष्यति। तथा हि

---

* कः पुनस्तैः कुलघ्नैः महाबलानां युष्माकमुन्मूलने उपायस्संमन्त्रितः।

† आर्यपुत्र श्रावितोऽसि मया प्रियसखेन वसन्तेन च सत्यं विव्रियतां राजरहस्यम्

---

महामोहस्वभावादपि सन्धिर्न भवेदित्याह। यथा कथञ्चिदपीति। यथा कथञ्चिदपीत्यनेन विवेकादीनां शरणागतत्वेऽपि महामोहस्सन्धिं नानुमन्येतेति सूच्यते ममापि अनभिमत इत्याह अहंवेति। कुतस्तवानुमतिरित्यत्राह न खल्विति ॥

युष्मत्क्षये क उपायस्तैस्संमन्त्रित इति पृच्छति। राजकुलं राजगृहं।

नियतेः दैवस्य विपर्यासः अन्यथाभावः अनिर्धारितः अनिश्चितः कालो यस्य तथा

मनोरथेति—॥ मनोरथमात्रे समर्थानां न तु कृत्ये महामोहविरोधिनां विवेकादीनाम् ॥ ५२ ॥

अनभिज्ञानां सार्वभौमो यो विवेकः तन्मूलाकर्तृत्वाभिमानादिशब्देन फलासङ्गस्य ग्रहणं। नानाविधा च या विषमदृष्टिस्तया सहकृतः। उपनिषदोक्तस्तत्त्वं

गुणत्रेतोन्मेषक्रमपरिणतानन्तविकृतिः
क्वचित्काले बुद्धिः कुलयुगलकूटस्थगृहिणी ।
अतिक्रूरात्यन्तप्रलयविधिदुर्मन्त्रपरुषां
पुरा भीमाकारां सृजति परभक्तिं परवती ॥ ५३ ॥

ततश्च ।

प्रव्रज्यादियुता परत्रपुरुषे पातिव्रतीं बिभ्रती
भक्तिस्सा प्रतिरुद्धसर्वकरणा घोरन्तपस्तप्यते ।
तुष्टा तेन जनार्दनस्य करुणा कुर्वीत तत्किङ्करं
कञ्चित्कैटभकोटिकल्पमसुरं……………………

(इत्यर्धोक्ते लज्जया विरमति)

---

स्वमनीषया कल्पितत्वं । निष्ठुरैरिति तेषामकामहतत्वं व्यज्यते संगंस्यते संगता भविष्यति । भीमरथीत्वं भयहेतुत्वात् तदुक्तं । सप्तत्यासप्तमे वर्षे सप्तमे मासि सप्तमे। रात्रौ भीमरथीनाम सर्वप्राणिभयंकरीति ।

**गुणेति**–॥ गुणानां सत्वादीनां त्रेतात्रिकं तस्य उन्मेषस्य औल्बणयस्य क्रमेण परिणता जाता अनन्ता च विकृतिर्यस्यास्सा तथोक्ता सत्वादीनां क्रमेणोन्मेषः एकैकस्योन्मेषे इतरयोरभिभवश्च नियतः यथोक्तं ।

रजस्तमश्चाभिभूयसत्वं भवति भारत ।
रजस्सत्वं तमश्चैव तमस्सत्वं रजस्तथा ॥ इति ।

परवती परतन्त्रा कुलयोः विवेकमहामोहकुलयोः युगलं युगं तस्य कूटस्थस्य कारणाभूतस्य जीवस्य गृहिणी बुद्धिः अतिशयेन क्रूरः अतिक्रूरः अन्तमतिक्रान्तोत्यन्तश्च यः प्रलयः तस्य विधिः विधानं तस्मिन् दुर्मन्त्रेण दुष्टमन्त्रेण दुरालोचनया परुषां घोरां भीमः भयंकरः आकारो यस्यास्तां परभक्तिं पुरा सृजति स्रक्ष्यति । यावत्पुरा निपातयोर्लडिति विधानात् ॥ ५३ ॥

ततश्च अथ चेत्यर्थः ।

**प्रव्रज्येति**–॥ प्रव्रज्या वैराग्यं आदिशब्देन शान्त्यादयो गृह्यन्ते परत्र परस्मिन् पुरुषे । भगवति पातिव्रतीं पातिव्रत्यं बिभ्रती दधाना सा भक्तिः प्रतिरुद्धानि स्वस्वविषयेभ्यो निवर्त्तितानि सर्वाणि करणानि इन्द्रियाणि यस्यास्सा तथोक्ता सती घोरं तीव्रं तपः नियमं तप्स्यते चरिष्यति । तेन तपसा तुष्टा जनार्दनस्य करुणा कैटभानां कोटिः कैटभकोटिः तत्कल्पं कञ्चिदसुरं तत् किंकरं तस्याः भक्तेः किंकरं दासं कुर्वीत कुर्यात् । असुरं इत्यन्तं कामं उक्त्वा विरराम । उक्तं उक्तिः । अर्धोक्ते अर्धोक्तावित्यर्थः

सो असुर क इति अपेक्षायां वसन्तस्सखलु सङ्कल्पसूर्योदय इति मनसि विचार्य कामाभिप्रायेण निर्मूलनस्त्वेष न इति निश्चित्य प्रकाशमन्यथा पूरयति- शेषमिति ॥

वसन्तः-(स्वगतं) स खलु सङ्कल्पसूर्योदयः निर्मूलनस्त्वेष न इति शेषः अन्यथा तु पूरयामि ।

(प्रकाशं) शेषं पुनर्दुर्वचम् ॥ ५४ ॥

रतिः-(सभयसंभ्रमं) * णाह परिरक्ख परिरक्ख ।

(इति भर्तारमाश्लिष्यति ।)

कामः-(गाढमुपगुह्य) अभुक्तपूर्वमिव निर्वेशं नाटयन् ।

(आत्मगतं)

जनितवलयभङ्गे दत्तहारावमर्दे
मुषितनिखिलखेदे मोहसन्तोषहेतौ ।
सचकितपरिरम्भे साम्प्रतं कातराक्ष्या-
स्त्यजति युगलचिन्तामङ्गयोरन्तरात्मा ॥ ५५ ॥

(प्रकाशं)

सखिमहामोहसैनिकधुरन्धरस्य मम प्रेयसी सती मा भैषीः । समाश्वसिहि समाश्वसिहि । इदं खल्वैन्द्रजालिकनगरनिगरणप्रायमनिपुणनैगमिकरथ्यापुरुषनिर्मितं क्रिमप्यैतिह्यम् ।

तथा हि

कुवृत्तमिति कौक्कुटं व्रतमधिक्षिपद्भिस्तथा
सुधाकरशतक्रतु प्रभृतिभिः स्वयं चस्खले ।

* नाथ परिरक्ष परिरक्ष

दुर्वचं वक्तुमनर्हमित्यर्थः ॥ ५४ ॥

एतद्वच श्रवणाद्रतेर्भयसंभ्रमौ जातौ । निर्वेशः सुखानुभवः ।

जनितेति- जनितः वलयानां भंगो यस्मिन् दत्तः हारस्यावमर्दः विच्छेदो येन तस्मिन् मुषिताः प्रणाशिताः निखिलाः खेदा येन तस्मिन् कातारक्ष्यास्सचकिते सभये परिरंभे अन्तरात्मा मनः अंगयोः युगलचिन्तां युगलताज्ञानं त्यजति ॥ ५५ ॥

तत्समाश्वासायाह इदमिति ।

ऐन्द्रजालमिन्द्रजालसंबन्धि यन्नगरनिगरणं तत् प्रायं अनिपुणाः नैगमिकाः पौराः रथ्या पुरुषाः रथ्यायां चरन्तः पुरुषाः तैर्निर्मितं । अनेन समर्थान्तरंगपुरुषनिर्मितत्वं नास्तीति तदसत्यता द्योत्यते । अतो वैराग्यमसुलभमित्याह ।

कुवृत्तमिति- कौक्कुटं व्रतं कुक्कुटसंबन्धिव्रतं स्त्रियमाक्रम्य भुक्तिरूपं कुवृत्तं कुत्सितं शास्त्रनिषिद्धं वृत्तं व्यापार इति अधिक्षिपद्भिः निरस्यद्भिः सुधाकर शतक्रतु-प्रभृतिभिः तदादिभिः । आदिशब्देन पराशरादयो गृह्यन्ते । स्वयं चस्खले स्खलितं ।

नदद्भ्रमरपङ्क्तिकेनमतिकार्मुके मामके
विरक्ति गृहदेहलीं क इह दोहली वीक्षते ॥ ५६ ॥

तिष्ठन्तु च महाबला मन्त्रिवर्गाः ।

प्रमादालस्यनिद्रादिविविधव्यूहविग्रहः ।
प्रज्ञावरणघोरात्मा मोहः केन विजेष्यते ॥ ५७ ॥

रतिः—(स्वगतं) * विहिवसेण विवरीअं फणिअं अ अउत्तेण (प्रकाशं) होज्ज-
मङ्गलं महाराअस्स

वसन्तः—अयि मन्मथपत्नि मास्मभैषी
ननु मोहादिषु संस्थितेषु सत्सु ।
प्रकृतिं पुरुषः प्रपित्समानः
प्रतिपद्येत विरक्तितो विमुक्तिम् ॥ ५८ ॥

रतिः—(आत्मगतं) † आः वसंत भासिअं वि विवरीअं वि अदीसइ

* विधिवशेन विपरीतं फणितमार्यपुत्रेण भूयात् मङ्गलं महाराजस्य

† आः वसन्तभाषितमपि विपरीतमिव दृश्यते

ताराहल्यादिसंभोगेषु तेषां बलात्कारेण प्रवृत्तेः । नदन्तो भ्रमरपंक्तिर्यस्मिन्तस्मिन् मामके कार्मुके नमति सति दोहली कौतुकी कलवको वा विरक्तेर्गृहस्य देहलीं वीक्षते नकोपि पश्यतीत्यर्थः ॥ ५६ ॥

महामोहोपि स्वतोदुर्जय इत्याह ।

प्रमादेति— प्रमादः अनवधानं आलस्यं कर्मण्यपाटवं निद्रा बाह्येन्द्रियव्यापारो परमः आदि शब्देन मूर्च्छा गृह्यते प्रमादादयो विविधा व्यूहविग्रहा यस्य स तथा । प्रज्ञाया आवरणमावृतिः तदेवघोर आत्मा स्वरूपं यस्य स तथा एवंरूपो मोहः केन विजेष्यते न केनापीत्यर्थः । अत्र केनापि पुरुषेण विजिष्येतइति ध्वनिः ॥ ५७ ॥

विरुद्धार्थकामवाक्यश्रवणेन भीता सत्येव रतिरियं वदतीति मत्वा तत्भयमपनेतुं वसन्त आह ।

अयोति—मास्मभैषीः माबिभीहि मोहादिषु संस्थितेषु सम्यक् स्थितेषु जीवत्सु सत्सु प्रकृतिं प्रपित्समानः प्राप्तुकामः पुरुषः विरक्तितः वैराग्याद्धेतोः विमुक्तिं प्रतिपद्येत ननु काकुः न प्रतिपद्येतेत्यर्थः ॥ ५८ ॥

वसन्तभाषितमित्यादि तत्रापि मोहादिषु संस्थितेषु मतेषु सत्स्विति प्रतीतेः पुनः पृच्छति आर्येत्यादि ।

(प्रकाशं)

* ग्रं ग्र उत्त किं विवेग्रस्स एत्थि विवेग्रो ग्रमच्चाणं वा तस्स समदमपमुहाणं पुरुसे खु पइदिं मोत्तूण गए ग्रह्माणं ताणं वि ग्र विसेस सुलहं ग्रवसाणं

कामः—एवमेतत् अस्मदुन्मेषमसहमानाः पुनरेते पापाः प्रज्ञाचक्षुषि क्वचित् पुरुषे साक्षिणि कुलद्वयमूलकूलङ्कषासु कुहनासु गहनमीहन्ते, सर्वथामूढचेतसश्चैते मोघकर्माणो भविष्यन्ति । यतः ।

> प्रसुप्तानपि युद्धेन सुग्रीवसुभटानिव ।
> कर्मशक्तिरनुच्छेद्या पुनरुद्बोधयिष्यति ॥ ५९ ॥

(नेपथ्ये)

कोऽसौ विपर्यस्तदृष्टिरनुग्रहैकनियतकौतुकानस्मानेव पापान् प्रलपति । रेरे दुर्विनीतदुराचारनिष्पन्दनिर्गलितकूटस्थानां नृशंसवृत्तीनां वः प्रतिक्षेपे पुरुषस्य निरस्तनिखिलदुःखनिरतिशयानन्दप्रापणे तदापि तद्बुद्ध्यनुप्रवेशेन स्वकुलसंजीवने च दनुजमथनदयाधीनवृत्तयो वयं प्रवर्तामहे अस्ति चोपनिषदीयमुद्घोषः ।

---

* आर्यपुत्र किं विवेकस्य नास्ति विवेकः अमात्यानां वा तस्य शमदमप्रमुखाणां पुरुषे खलु प्रकृतिं मुक्त्वागते अस्माकं तेषामपि अविशेष सुलभमवसानम्

---

अविशेषसुलभमवसानं आश्रयाभावादिति भावः । प्रज्ञानं चक्षुर्यस्य स तथा । अन्ध इति च । साक्षिणि साक्षाद्द्रष्टरि क्वचित्स्यिते सतीति शेषः । कुलद्वयस्य कूलंकषासु हन्त्रीष्वित्यर्थः कुहनासु मायासु तद्विषये गहनं गूढं यथा भवति तथा । अन्धइव पुरुषे चेष्टमाने अस्मदुन्मेषासहतया कुलद्वयघातिनीं मायामतिनिगूढमिच्छन्तीति भावः । मोघकर्माणो भविष्यन्तीत्युक्तं । तत्कथमित्यपेक्षायामाह **यत** इति ।

युद्धेन प्रसुप्तानपि मोहादीनिति शेषः सुग्रीवस्य सुभटान् ऋक्षवानरादीनिव अनुच्छेद्या प्रतिघातानर्हा कर्मशक्तिः कर्मणां पुण्यपापरूपाणां शक्तिः फलप्रदानसामर्थ्यं पुनरुद्बोधयिष्यति । कदाचिद्विनष्टा अपि मोहादयः कर्मशक्त्या पुनर्जायन्त एवेति भावः ॥ ५९ ॥

एतत्कामवचनमाकर्ण्यानन्तरं प्रवेष्टुकामो विवेकः क्रोधादाह **कोऽसाविति** ॥

विपर्यस्ताविपरीता दृष्टिः यस्य स तथा । तदेवाह अनुग्रहेति निष्पन्दं निश्चलं यथा भवति तथा निर्गलितः कूटस्थो यैस्तेषां । निरस्तनिखिलदुःखो यो निरतिशयानन्दःतत्प्रापणे तदाविमुक्तिदशायामपि तस्य पुरुषस्य बुध्यनुप्रवेशेन स्वकुलसञ्जीवने स्वकुलस्य संजीवने च दयाधीनाः वृत्तयो व्यापारा येषां ते तथोक्ताः । दनुजमथनदयाधीनवृत्तित्वमुपनिषत्प्रसिद्धमित्याह । **अस्ति चेति** । तमेवोद् घोषमाह ।

स्वाधीनसंसरणनाट्यनिरूढवृत्तेः
सन्तोषितः प्रणतभूमिकयास्य पुंसः ।
स्थाने विधास्यति विभुस्स्थिरचिह्नभेदं
क्रीडानटस्य भगवान् कृपया स्वसाम्यं ॥ ६० ॥

ततश्च ।

रिपुमथनकृतं यशो महीयः
पितृपरिरक्षणसंभृतश्च धर्मः ।
अभिमतघटनोद्भवश्च हर्ष
स्सपदि विधास्यति सन्निधिं स्वयन्नः ॥ ६२ ॥

कामः—(सभयावहित्यमवलोक्य) प्रिये मोहपरिपन्थिपक्षे मूर्धाभिषिक्तः स्वयमसौ स्वसहधर्मचारिण्या सुमत्या सहाभ्यमित्रीण उपसर्पति । अयं हि

मुकुलयति विवित्सां मोहविध्वंसमिच्छन्
विमृशति निगमान्तान् वीक्षते मोक्षधर्मान् ।

---

**स्वाधीनेति**—स्वशब्दो भगवत्परः । संसरणस्य भगवदधीनत्वं । एष एवासाधु कर्म कारयति । त यमयोनिं निनीषतीति श्रुतं । संसरणमेव नाट्यं तस्मिन् निरूढा स्थिरा वृत्तिर्यस्य तस्य । प्रणताः प्रपन्नाः तेषां भूमिकया वेषेण सन्तोषितः । विभुः स्थिरः चिह्नानां भेदो यस्मिन् तत् । स्वसाम्यं भोगमात्रे साम्यं स्थाने स्वासाधारणे स्थानविशेषे विधास्यति करिष्यति । स्थिरचिह्नभेदमित्यत्र शेषित्वलक्ष्मीपतित्व जगद्व्यापारादिचिह्ने शब्दार्थः ॥ ६० ॥

ततश्च हेतोः ।

**रिपुमथनेति**— रिपूणां मथनेन कृतं कल्पितं महीयः श्लाघ्यं यशः पितुः परिरक्षणेन संभृतः पूर्णः धर्मश्च अभिमतघटनायाः उद्भवः उत्पत्तिर्यस्य स तथा हर्षश्च सन्निधिं सान्निध्यं विधास्यति ॥ ६१ ॥

विवेकदर्शनाद्भयं स्त्रीसन्निधौ तदनुचितमित्यवहित्या ताभ्यां सहितं यथा भवति तथावलोक्य अभ्यमित्रीणः अमित्राभिमुखं ।

**मुकुलयतीति**— विवित्सां वित्तेच्छां विख्यातिलाभपूजेच्छां वा मुकुलयति नाशयतीत्यर्थः । मोहविध्वंसमिच्छन्निगमान्तान्विमृशति । तदर्थान् विचारयति ।

निशमयति च गीतान्नित्यमेकान्तभक्त्या
गुणपरिषदवेक्षी गुप्तमन्त्रो विवेकः ॥ ६२ ॥

अपि च

प्रत्यङ्मुखीं सुमतिदीप्तिमिह प्रचिन्वन्
प्राप्तोदयोऽप्यमितरागबलाभिभूतः ।
क्षाम्यन्नहङ्कृतिमयीमवशोहिमानीं
भास्वानसौ भजति विष्णुपदं विवेकः ॥ ६३ ॥

तत्सांप्रतमस्माभिरप्राप्तसमयैरसहायैश्चारातिसन्निधावात्मानं प्रकाशयितुर्मिति समित्रकलत्रो निष्क्रान्तः ॥

॥ मिश्रविष्कम्भः ॥

———

मोक्षधर्मान्मोक्षैकान्तान् धर्मान्वीक्षते। तत्प्रतिपादकान् ग्रन्थान् परिचिनोति एकान्तभक्त्या अनन्यभक्त्या गुणाः शमदमादयः तेषां परिषत् उपचयः तदवेक्षी तस्यामेव दत्तदृष्टिः ॥ ६२ ॥

अथास्य विवेकस्य सूर्यसाम्यं वर्णयति ।

प्रत्यङ्मुखीति—प्रत्यङ्मुखीमात्मविषयां पश्चिमाशाभिमुखींवा सुमतिः शोभनामतिरेवदीप्तिः तां इह लोके प्रचिन्वन् विस्तारयन् प्राप्तः उदयः अभ्युदयो येन स तथा प्राप्ताविर्भावश्च तथापि अमितो यो रागः पुरुषमोक्षणाभिलाषः अरुणिमा च तद् बलेनाभिभूतः प्राप्ताभ्युदयस्य परैरभिभवो न संभवतीति विरोध सूचकोऽपि शब्दः । अपेस्समुच्चयार्थत्वाद्विरोधस्याभासत्वं । अहंकृतिरहंकारः देहात्माभिमानः तन्मयीं हिमानीं क्षाम्यन् नाशयन्नित्यर्थः अवशः भगवत्परतन्त्रः भास्वान् दीप्तिमान् सूर्यश्च विवेकः विष्णुपदं हरिचरणं नभश्च विशति भजते प्रविशति च । पवन तपनादीनां भगवदधीनत्वं । भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति । श्रुतं ॥ ६३ ॥

अप्राप्तः समयः स्वोचितकालो यैस्तैरस्माभिः । मित्रं वसन्तः । मिश्रसंकीर्णशुद्धसंकीर्णभेदाद्द्विविधोविष्कम्भः । तदुक्तं । एकानेककृतश्शुद्धःस्संकीर्णो नीचमध्यमैरिति । एकानेकैर्वा मध्यमपात्रैः कृतश्शुद्धः । नीचमध्यपात्रैः कृतस्संकीर्ण इत्यर्थः ।

ततः प्रविशति राजा सुमतिश्च ।

राजा—(सविमर्शं) प्रिये समाकर्णितस्त्वया अनवधिकदुरितविप्लवनमूलभूत-स्यामन्ददर्पस्य कन्दर्पवटोराटोपः, यदसावशेषपापनिष्कृतौ प्रवर्त-माना नस्मानेव पापारोपेण परिवदति । अथवा

पश्यति परेषु दोषा
नसतोपि जनस्सतोपि नैव गुणान् ।
विपरीतमिदं स्वस्मिन्
महिमामोहाञ्जनस्यैषः ॥ ६४ ॥

सुमतिः—* अं अ उंत विरूपाखुजणाणि अ मुहदोसं णिंमले सुविदंपणेसु-समंपंति

राजा—देवि सत्यमेतत् यथार्थदर्शिनी यथा दृष्टार्थवादिनीच भवती

* आर्यपुत्र विरूपाः खलु जनाः निजमुखदोषं निर्मलेष्वपि दर्पणेषु समर्पयन्ति

अथांकः तत इत्यादि । सच

प्रत्यक्षनेत्रचरितो बिन्दुव्याप्तिपुरस्कृतः ।
अंको नानाप्रधानार्थसंविधानरसाश्रयः ॥

इत्युक्तलक्षणः ।

राजा विवेकः तस्यैवात्र नायकत्वात् । नायकलक्षणं ।

अभिगम्यगुणोपेतो धीरोदात्तः प्रतापवान् ।
कीर्त्तिकामो महोत्साहस्त्रय्यास्त्राता महीपतिः ॥

इत्युक्तं ।

कन्दर्प एव पटुः बालः तस्याटोपः गर्वः । परिवदति निन्दति । एवमन्यथा ज्ञानस्य परिवादस्य चाभिमानमूलकत्वं प्रतिपाद्याथ मोहहेतुकत्वमाह अथवेति ।

जनः परेष्वसतोपि दोषान् पश्यति । सतोपि नैव गुणान् पश्यति । स्वस्मिन्ना-त्मनि इदं विपरीतं सतोपि दोषाच पश्यति असतोपि गुणान्पश्यति इति यत् । एष मोहाञ्जनस्य महिमा ॥ ६४ ॥

यथार्थं अर्थातिक्रमो न यस्मिन् कर्मणि तद्यथा भवति तथा पश्यतीति यथार्थ-दर्शिनी । दृष्टार्थमनतिक्रम्य वदतीति यथा दृष्टार्थवादिनी ।

किं च ।

निर्धूतनिखिलदोषा
निरवधिपुरुषार्थलम्भनप्रवणा ।
सत्कविफणितिरिवत्वं
सगुणालङ्कारभावरसजुष्टा ॥ ६५ ॥

(विचिन्त्य) प्रिये हन्त निर्विकारपुरुषपीडया क्रीडन्त एते कामक्रोधलोभादयस्सुपस्थानमास्थिताः, वयं पुनस्तमेव निश्रेयसे नियोजयितुं समस्तजनसां सिद्धिकसुहृदो भगवतस्तापत्रयाभिहतसर्वजनसञ्जीवनीं दयादृष्टिमावहन्तः कदध्वनाप्रवृत्ताः । अहो महानयमुन्मत्तालापः पश्य मे त्वया सह निर्वर्तनीयं परानुग्रहव्रतम् ।

महत्यारम्भेऽस्मिन्मधुरिपुदयासंभृतधृति-
र्बहिष्कृत्यारातीन्सुमुखिबहिरन्तश्च भवतः ।
समाधावाधाय क्षपितवृजिनं क्षेत्रिणमहं
परप्राप्त्याधन्यं परिणमयितुं प्राप्तनियमः ॥ ६६ ॥

---

निर्धूतेति– लंभनं लाभः तत्प्रवणा । सगुणा गुणसहिता गुणाः ओजः प्रसादादयः सौन्दर्यादयश्च अलंकाराः उपमादयः हारकेयूरादयश्च भावाः अभिप्रायाः विलासाश्च रसाः शृंगारादयः प्रीतयश्च तैः जुष्टा अतः सत्कविफणितिरिव ॥ ६५ ॥ पुनश्च तदुक्तमेव विचिन्त्याह प्रिये इति ।

हन्तेति खेदे । पुरुषस्य निर्विकारत्वं बाल्ययौवनादिविकारराहित्यं । सर्वेषां जनानां सांसिद्धिकसुहृदः सम्यक् फलसिद्धिहेतुभूतसुहृदः आवहन्तः आकर्षन्तः संपादयन्त इत्यर्थः । कदध्वना कुत्सितमार्गेण । परानुग्रहे व्रतं नियमं ।

महतीति–महति आरंभस्य महत्वं । कार्यद्वारा । अस्मिन् आरंभे मधुरिपोः दयया संभृता संपूर्णा धृति धैर्यं यस्य स तथोक्तः । मधुरिपुशब्देनास्य विरोधिनिरासकत्वं तद्द्वारास्वप्रत्यूहप्रशमश्च सूच्यते । बहिरन्तश्च भवतः मलयानिलकोकिलादयो बहिर्भवन्तः मोहरागद्वेषादयोन्तर्भवन्तः तानुभयविधानरातीन् बहिष्कृत्य विजित्य क्षपितं नाशितं वृजिनं पापं यस्य तं क्षेत्रिणं पुरुषं परस्य परमपुरुषस्य प्राप्त्याधन्यं परिणामयितुं धन्यतया कर्तुं प्राप्तनियमः अनेनारंभाख्या कार्यावस्था प्रतिपादिता । तदुक्तं । औत्सुक्यमात्रमारम्भः फललाभावभूयसे । इति ॥ ६६ ॥

सुमतिः—* अंअ उंत कहंसो णिच णिमल महाणंद सअं पहो संवजण दंसण जोंग सहावो पुरुसो महामोहेण माण मअ मंवरंप मुहे हिंवि दुंविणी एहिं दुंवार गंव संकुल दुरिअ महोंमि संघाअ संघडण भीसणे दुंख साअरंमि णिखिंतो ।

राजा—प्रिये सूक्ष्मदर्शिनि किंदृष्टमपह्नोतव्यं आगमिकं वानप्रत्येतव्यं । पश्यतु भवती ।

स्वतः प्राप्तं रूपं यदिह किल भावेषु तदपि
त्यजन्तस्ते दृष्टा नियतिघटितोपाधिवशतः ।
प्रकृत्या तिष्ठन्ति ह्युपधिविगमे ते च तदसा
वनादिस्संसारः पुरुषमुपरुन्धे गलति च ॥ ६७॥

सुमतिः—† एवं एदं, तहविकहं एआवंतं कालं परमकारुणिएण देवेण लच्छीवंलहेण दुंसह दुंख सअ दूमिओ पुरुसो उपेंखिओ ।

---

* आर्यपुत्र कथं सनित्यनिर्मलमहानन्दस्स्वयंप्रभस्सर्वजनदर्शनयोग्यस्वभावः पुरुषः महामोहेन मानमदमत्सरप्रमुखैरपि दुर्विनीतैः दुर्वारगर्वसंकुलदुरितमहोर्मिसंघातसंघटनभीषणे दुःखसागरे निक्षिप्तः ।

† एवमेतत्तथापि कथं एतावन्तं कालं परमकारुणिकेन देवेन लक्ष्मीवल्लभेन दुस्सहदुःखशतधूमितः पुरुष उपेक्षितः ।

---

सूक्ष्मानर्थान्पश्यतीति सूक्ष्मदर्शिनी तत्र संबुद्धिः । दृष्टं प्रत्यक्षसिद्धं अपह्नोतव्यं नास्तीति प्रतिक्षेप्तव्यं किं न प्रतिक्षेप्तव्यमित्यर्थः । आगमिकं आगमसिद्धं वा वस्तु किन्न प्रत्येतव्यं शास्त्रसिद्धं सर्वमस्तीत्येवाधातव्य मित्यर्थः ।

**स्वतः प्राप्तमिति**—भावेषु पदार्थेषु स्वतः प्राप्तं यत् किल रूपं तत् नियत्या दैवेन घटितः संपादितः यः उपाधिस्तद्वशतः त्यजन्तस्ते भावाः दृष्टाः यथा स्फटिकमण्योः जपाकुसुमसान्निध्येन स्वाभाविकं रूपामपहाय शोणिमानं वहन्तो दृश्यन्ते । ते भावाश्च उपधिविगमे उपाध्यपगमे प्रकृत्या स्वस्वरूपेण तिष्ठन्ति तत् उपधेः स्वसन्निधान तदभावाभ्यां स्वसंसृष्टवस्तुषु रूपान्तर निजरूप प्रापकत्वस्वाभाव्यादित्यर्थः । उपधिः उपाधिभूतः असौ संसारः संसारयति सम्यक् सञ्चारयतीति संसारशब्देन प्राचीनं कर्मोच्यते । कर्मणामेवहि सांसारिकसुखदुःखोपभोगहेतुत्वं । यथोक्तं भगवता पराशरेण

अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वदा ॥
संसार तापानखिलानवाप्नोत्यतिसन्ततानिति ।

पुरुषं नित्यनिर्मलमप्युपरुन्धे भगवत्कृपया गलति च ॥ ६७ ॥

राजा—किन्न श्रूयते भवत्या, यदनादिनिजकर्मरूपाविद्योपरोधेन चैत्रज्ञो यमीश्वरेण क्षिप्तः संसरन्नवसरे तेनैव समुद्ध्रियत इति ।
यथा

मिथः कलहकल्पनाविषमवृत्तिलीलादया
परिग्रहणकौतुकप्रथितपारवश्यः प्रभुः ।
स्वलक्षितसमुद्गमे सुकृतलक्षणे कुत्रचित्
घुणक्षतलिपिक्रमादुपनिपातिनः पातिनः ॥ ६८ ॥

अत्र च ।

सुखदुःखवाहिनीनां
व्यत्ययविनिमयनिवर्तनानर्हे ।
नियतक्रमे प्रवाहे
निपतितमुत्क्षिप्यमोदतेदेवः ॥ ६९ ॥

सुमतिः—*अं अउंत अणाइंमि गए काले अलंधपुव्वो मोखो अणंतेवि उवरिअण कालंमि केण कहं लहिंज इति संकाकलंक कंबुरि अंमेहिअअं ।

* आर्यपुत्र अनादौ गते काले अलब्धपूर्वो मोक्षः अनन्तेऽप्युपरितनकाले केन क लभ्यत इति शङ्काकलंककर्बुरितं मे हृदयं ।

अयं चैत्रज्ञः कर्मरूपाविद्योपरोधेन भगवता निक्षिप्तस्संसरति अवसरे तेनैव समुद्ध्रियत इति यत् तत् किं न श्रूयते भवत्या । उक्तमेवार्थं दर्शयति ।

**मिथः** इति– मिथः अन्योन्यं कलहकल्पनया विषमा परस्परविरुद्धा वृत्तिर्व्यापारो ययोस्ते विषमवृत्ती लीलादया च तयोः परिग्रहणे कौतुकमिच्छा तेन प्रथितं प्रसिद्धं पारवश्यं पराधीनत्वं यस्य स तथा प्रभुस्स्वामी स्वलक्षितः स्वेन दृष्टः समुद्गमः निष्पत्तिर्यस्य तस्मिन् सुकृतलक्षणे सुकृतरूपे कस्मिंश्चिद्धेतौ यादृच्छिकादौ घुणक्षतेषु कमिक्षतरेखासु लिपिक्रमात् लिपिसादृश्यात् क्वचिल्लिपित्वप्राप्तिक्रमादुपनिपातिनः पततः नः अस्मान्पाति रक्षतीति ॥ ६८ ॥

अत्र किमैहिकरक्षणमात्रमित्यत आह ।

**सुखेति**–सुखदुःख एव वाहिन्यः नद्यः तासां व्यत्यय विनिमयनिवर्त्तनानर्हे व्यत्ययः विनाशः विनिमयः केन चिद्द्रव्येण द्रव्यान्तरस्याधानं निवर्त्तनं निरोधः एषामनर्हे नियतः क्रमो यस्य तस्मिन् प्रवाहे अनुभवपारंपर्यां निपतितमुत्क्षिप्य उद्धृत्यदेवो मोदते ॥ ६९ ॥

आर्यपुत्रेत्यादिकेन हेतुनेत्यर्थः ।

**कथमिति**–प्रकारविषयप्रश्नः शंकाकलंकेन शंकारूपकलंकेन कर्बुरितं शबलितं एकरूपं न भवतीत्यर्थः ।

राजा—देवि विवेकवल्लभे अनधिगतप्रमाणतर्कसरणिरिव कथमेवमाशङ्कसे।

अथवा

कालस्वभावनियतियदृच्छादिषु वस्तुषु ।
कारणं किमिवात्रेति तापसैरपि तर्कितम् ॥७०॥

इदमत्र तावदवधातव्यं ।

कर्माविद्यादिचक्रे प्रतिपुरुषमिहानादिचित्रप्रवाहे
तत्तत्काले विपत्तिर्भवति हि विविधा सर्वसिद्धान्तसिद्धा।
तल्लब्धस्वावकाशप्रथमगुरुकृपागृह्यमाणः कदाचित्
मुक्तैश्वर्यान्तसंपन्निधिरपि भविता कश्चिदित्थं विपश्चित् ७१

अनधिगता अविदिता प्रमाणानां तर्काणां च सरणिर्मार्गो यया सा तथात्वे कथमेवमाशंकसे ।

अयं भावः । श्रुतिस्मृत्यादिप्रमाणानि चिराय संसरतो जीवस्य क्वचित्काले यादृच्छिकादि सुकृतं भवति परमकारुणिकः सर्वज्ञः स्वावसरं प्रतीक्षमाणस्तदेव व्याजीकृत्य द्वेषादिकमुत्पाद्य सदाचार्यसंपत्त्या हेयोपादेयविवेचनसामर्थ्यं स्वोचितपुरुषार्थानुगुणोपायानुष्ठानं तत्प्रभृतिस्वप्राप्तिरूपपरमपुरुषार्थाभिनिवेशं त्वरां च तीव्रां वर्धयित्वा शरीरान्ते मुक्तिं च प्रापयतीति वदन्ति । तर्काश्च तदनुगुणास्सहस्रशस्सन्तीति त्वयैव शंकितुमपि सांप्रतमित्याहाथवेति ।

काल इति—कालः सर्वेषां वस्तूनामुत्पत्त्यादिहेतुभूतः कलाकाष्टादिरूपः स्वभावः पुण्यपापात्मकं कर्म नियतिर्दैवं यदृच्छा आकस्मिकविपाकः एतदादिषु इह लोके अत्र मोक्षलाभे तापसास्सर्ववस्तुसाक्षात्काराः तैरपि तर्कितं नतु निर्धारितं ॥ ७० ॥

अथैतद्वक्तुकामस्तामवहितामारचयति । इदमिति । इदं वक्ष्यमाणं ।

कर्मेति । इह जगति प्रतिपुरुषं पुरुषे पुरुषे अनादिश्चित्रश्च प्रवाहो नैरन्तर्यं यस्य तस्मिन् कर्माविद्यादिचक्रे कर्माविद्ये आदी येषां तानि कर्माविद्यादीनि कर्म पुण्यापुण्यरूपं अविद्या अज्ञानं वासना अभ्यासः रुचिरादरः प्रकृत्या संबन्ध इत्येतेषां यच्चक्रं चक्रवत्पर्यावृत्तिस्तस्मिन् काले विपत्तिः विपाकः सर्वसिद्धान्तेषु सिद्धा अंगीकृता भवतिहीति प्रसिद्धेः। सकलसिद्धान्तिभिरपि क्वचित्समये मोक्षहेतोरंगीकारादिति भावः। तल्लब्धेति—इत्थं तल्लब्धस्तेन यादृच्छिकसुकृतादिरूपविपाको लब्धसावकाशः स्वांगीकार समयो येन स तथा तस्य प्रथमगुरोः भगवतः कृपया गृह्यमाणः । भगवतः प्रथमगुरुत्वं गुरुपरंपरायां प्रथमत्वात्स्वचाचार्यवंश्यो ज्ञेयः। आचार्याणामसावसाभगवत इति हि श्रूयते । विपश्चिदतिशयितज्ञानः कश्चित्मुक्तैश्वर्यं मुक्तानां यत् भगवदेकानुभवरूपमैश्वर्यं तदन्तः अवधिः यस्यास्सा तथा तस्यास्संपदः निधिः निधीयतेस्मिन्निति निधिः स्थानं तत् भोक्तेति यावत् भविता भविष्यति । अनादावप्यतीतकाले भगवत्कृपया अलब्धावकाशतया मुक्त्यभावः कदाचिद्यादृच्छिकसुकृतादिलब्धावकाशतया तत्कृपया मोक्षलाभश्च भवतीति न किंचिद्विरोध इति भावः ॥ ७१ ॥

स च मोह्यमाणो मत्समदमादौ तावत् ।

दर्पादग्रदशेन्द्रियाननमनो नक्तञ्चराधिष्ठिते
देहेऽस्मिन्भवसिन्धुना परिगते दीनान्दशामास्थितः ।
अद्यत्वेहनुमत्समेन गुरुणा प्रख्यापितार्थः पुमान्
लङ्कारुद्धविदेहराजतनयान्यायेन लालप्यते ॥ ७२॥

(अपि च)

बहुलदुरितद्वारे ब्राह्मे पुरे परसंमत-
स्वमतिघटितस्वातन्त्र्यत्वादयन्त्रितचेष्टितः ।
विषमसचिवैः स्वे स्वे कार्ये विगृह्य विकृष्यते
नरपतिरिव क्षीबो नानाविधैरयमिन्द्रियैः ॥ ७३ ॥

---

इदानीमस्य दशामाकर्णयेत्याह सचेति ।

दर्पेति–दर्पेण गर्वेण उदग्रः उदीर्णः दशेन्द्रियाणि ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च तान्येवाननानि यस्य स तथा सचासौ मनोनक्तञ्चरश्च मन एव नक्तञ्चरः राक्षसः रावण इत्यर्थः तेनाधिष्ठिते। भवस्संसारः स एव सिन्धुस्सागरः तेन परिगते दुस्तरत्वाभिप्रायेण संसारस्य सिन्धुत्वरूपणं तेन परिवृते अस्मिन्देहे दीनां शोच्यदशामवस्थामास्थितः प्राप्तः । अद्यत्वे इदानीं हनुमत्समेन आञ्जनेयतुल्येन गुरुणा गुरोर्हनुमत्साम्यवचनं अस्य ज्ञानशक्त्याद्यतिशयख्यातनार्थं। हनूमतो ज्ञानाधिक्यं। नूनं व्याकरणं कृत्स्नेनेन बहुधाश्रुतं। बहुव्याहरतानेन न किंचिदपशब्दं। इत्यादौ प्रतीयते। शक्तिस्सागरलंघनौषधपर्वतानयनादौ सुव्यक्ता। स्नेहो मेपरमो राजंस्त्वयि नित्यं प्रतिष्ठितः। भक्तिश्च नियता वीरभावो नान्यत्र गच्छति। इत्यादौ भगवद्भक्तिश्च प्रसिद्धा वैराग्यं चापि गीतं। प्रख्यापितः प्रकर्षेणावेदितः अर्थः ज्ञातव्यर्थः यस्य सतथोक्तः पुमान् लंकायां रुद्धायाः विदेहराजतनयायाः न्यायेन प्रकारेण लालप्यते भूयोभूयः प्रलपति ॥ ७२ ॥

पुनरप्यस्य दशामेवाह ।

बहुलेति–बहुलानि बहूनि दुरितान्येव द्वाराणि यस्मिन् तस्मिन्। दुरितशब्देन दुरितसाधनानीन्द्रियाण्युच्यन्ते। ब्राह्मे ब्रह्मकार्ये ब्रह्मप्रकृतिः तत्कार्ये शरीरे ।

ममयोनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहं ।
संभवस्सर्वभूतानां ततो भवति भारत ।

इत्यत्र ब्रह्मशब्दः प्रकृतौ प्रयुक्तः। परेण ईश्वरेण संमत मंगीकृतं स्वमतिघटितं स्वबुद्ध्या संपादितं स्वातन्त्र्यं यस्य स तथाध्वात् आदावीश्वरेण करणकलेवरप्रदानपूर्वकं तत्तत्कार्येष्वस्य कर्तृत्वप्रदानात् अयन्त्रितमनिवारितं चेष्टितं व्यापारो यस्य स तथा। नानाविधैः नानाप्रकारैरिन्द्रियैरयं पुरुषः विषमैः परस्परविरुद्धैः सचिवैः क्षीबः मत्तः नरपतिरिव स्वेस्वेकार्ये विगृह्य परस्परकलहं कृत्वा विकृष्यते आकृष्टोभवति ॥ ७३ ॥

सुमतिः—* अं अउंत एवं हु अवहवेडि अघरगअं विअ अंपाणं अंपमंत बुंधी किंण णिंजिगमिसा रंक्खइ पुरुसो ।

राजा—प्रिये सर्ववेदिनि, अनादिः खल्वयमलंघनीयो रागजलधिः ।

स्थिरत्रसविभक्तिमत्त्रिविधरागदृश्योदयं
सुमृष्टमणिभित्तिवत्स्वयमभिद्यमानः पुमान् ।
त्रियुग्मगुणशिल्पिना त्रिगुणतूलिकाधारिणा
विविच्य विनिवेशितं वहति चित्रमत्यद्भुतम् ॥७४॥

सुमतिः—(सविषादं) † इदिणाम उंमंतदसं पुरुसंबुंधीपि अ अमा किंण बोहेइ ।

* आर्यपुत्र एवं हुतवहवेष्टितगृहगतमिवात्मानमप्रमत्तबुद्धिः किन्ननिर्जिगमिषया रक्षति पुरुषः ।

† इतिनाम उन्मत्तदशंपुरुषं बुद्धिः प्रियतमा किन्न बोधयति ।

निर्जिगमिषा निर्गन्तुमिच्छा । रागजलधिः रागः भोगेच्छा स एव जलधिः रागस्य जलधित्वरूपणादलंघनीयता हेतुभूतमपरिच्छिन्नत्वं प्रतीयते ।

संसारस्यात्भुत चित्रसाम्यप्रतिपादनद्वारा तदनुभवादस्य वैमुख्यमित्याह ।

स्थिरेति—॥ स्थिरत्रसविभक्तिमत् स्थावरजंगमविभागवत् त्रिविधः त्रिप्रकारः लोहितशुक्लकृष्णरूपः यो रागः वर्णः तेन दृश्यः दर्शनीयः उदयः उत्पत्तिर्यस्य तत्तथा । त्रिगुणाः त्रयोगुणा एव तूलिकालेखनशलाका तद्धारिणा त्रियुग्मगुणः षाड्गुण्यपूर्णः परमात्मा स एव शिल्पी तेन ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि षड्गुणाः षाड्गुण्यपूर्णत्वं च भगवतएवासाधारणं ।

ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥
तवानन्तगुणस्यापि षडेव प्रथमे गुणाः ।
यैस्त्वयेव जगत्कुक्षावन्येप्यन्तर्निवेशिताः ॥

इत्यादिषु तथा दर्शनात् । विविच्य पृथक् पृथक् विनिवेशितं निक्षिप्तं अत्यद्भुतं अत्याश्चर्यं अस्थिरेषु स्थैर्यबुद्धिजनकत्वं दुःखरूपेषु सुखत्वभ्रमहेतुत्वं अप्राप्तेषु प्राप्तताज्ञानकारणत्वं इत्यादिदर्शनादस्यात्यद्भुतत्वं चित्रं चितं प्रत्यगात्मानं त्रायत इतिव्युत्पत्या चित्र शब्देन देह उच्यते । सुमृष्टा सुष्ठु शोधिता मणिमया भित्तिरिव स्वयमभिद्यमानः देवादिभेदरहितः सुमृष्टाहिभित्तिर्नभिद्यते । पुमान्वहति ॥ ७४ ॥

यत्ते पुरुषदुःखज्ञानेनास्याविषादः ।

राजा–प्रिये सूक्ष्मवादिनि सापिखल्विदानीं स्वयं प्रकाशापि सुप्तप्राया वर्तते ।

यथा

पत्यौ दूरङ्गतवति रवौ पद्मिनीव प्रसुप्ता
म्लानाकारा सुमुखिनिभृता वर्तते बुद्धिरंबा ।
मायायोगान्मलिनितरुचौ वल्लभे तुल्यशीला
राहुग्रस्ते तुहिनकिरणे निष्प्रभा यामिनीव ॥ ७५ ॥

सुमतिः–*अं अउंत अइकरुणा इमा बुंधिसहि अंस पुरुसंस बंधदसा । ए अंस विउल दुंख जालविंहलंस विंयरेण मोंखा अमं पआसंतो विसंकंमंकुणुसु ।

राजा–देवि अनवरतशोभनाशंसिनि, निदानमिह निपुणमुपपादयन् प्रतिपन्नामेव भवतीं प्रत्यभिज्ञापयामि ।

दुरासेधस्थेम्ना दुरितपरिपाकेन भविनः
प्रमाथी संसारः प्रशमरहितोयं प्रभवति ।

---

* आर्यपुत्र अतिकरुणेयं बुद्धिसहितस्य पुरुषस्य बद्धदशा एतस्य विपुलदुःखजालविह्वलस्य विस्तरेण मोक्षागमं प्रकाशयन् विशंकां मा कुरुष्व

---

स्वयंप्रकाशापि सुप्तप्राया अपि तु यच्छरीरग्लानिर्मालिन्यं च लोके न दृश्यते । अस्यास्त्विदानीं तदुभयमस्तीति दर्शयितुं दृष्टान्तद्वयीमाह ।

पत्याविति–॥ पत्यौ रवौ दूरं दूरदेशं गतवति सति प्रसुप्ता मुकुलिता पद्मिनीव म्लानाकारा क्लान्तदेहा अंबा अस्माकंमाता बुद्धिर्वर्तते मायायाः प्रकृतेर्दोषात् । **मायां तु प्रकृतिं विद्यादिति** श्रुतेः । मायाशब्देन प्रकृतिरुच्यते । विचित्रकार्यहेतुत्वादस्याः मायाशब्दवाच्यत्वं । तत्संबन्धजनितदोषादित्यर्थः । मलिनितरुचौ मलिनिर्मालिन्यं संजातमालिन्यं स्वप्रभाभूतज्ञाने वल्लभे नायके पुरुषे तुल्यशीला तुल्यशीलमाचारो यस्यास्सा तथा तुहिनकिरणे हिमांशौ राहुग्रस्ते सति यामिनी निष्प्रभा वर्त्तते ॥ ७५ ॥

अतिकरुणातिशोच्या ।

निदानं प्रथमकारणं । निदानं त्वादिकारणमिति निघण्टुः । प्रतिपन्नां ज्ञातवतीमेव प्रत्यभिज्ञापयामि स्मारयामि ।

दुरासेधेति–॥ दुरासेधमनिवारणीयं स्थेम स्थैर्यं यस्य तेन दुरितपरिपाकेन भविनस्संसारिणः प्रमाथी नाशकः । ज्ञानसंकोचक इति यावत् । प्रशमरहितः अयं संसारः प्रभवति नियन्ता भवति । तस्य संसारस्य निरोधे विरुपधिकं सहजं यत्का-

निरोधे तस्यैकानिरुपधिककारुण्यघटिता
स्वतन्त्रेच्छाशक्तिः स्वयमुपधिमाधाय रमते ॥ ७६ ॥

सुमतिः—* ज इ म एवि सो उवाहीसुणि अंवो तामं अं अउंतो आणवेदु ।

राजा—प्रिये विशुद्धभाषिणि, श्रूयतामिह सूक्ष्मार्थसंग्रहः ।

मदनमत्सरमानमयः पुमान्
बहुपिशाचगृहीतइवार्भकः ।
निगमसिद्धनरेन्द्रनिरीक्षया
निपुणपद्धतिमभ्यवपद्यते ॥ ७७ ॥

ततश्च

अनघदेशिकदृष्टिसुधाप्लवे
विधिवशादुपसेदुषि देहिनः ।
विमलबोधमुखाविविधा गुणाः
परिणमन्त्यपवर्गदशाङ्कुराः ॥ ७८ ॥

* यदि मयापि स उपाधिः श्रोतव्यस्तदा मामार्यपुत्र आज्ञापयतु ।

रुण्यं । सुहृदं सर्वभूतानामिति गीयते । तेन घटिता संबद्धा स्वतन्त्रस्येश्वरस्येच्छायाश्शक्तिः स्वयमेव उपाधिं अज्ञातसुकृतादिकमाधाय रमते क्रीडति । वैषम्यनैर्घृण्यप्रसंगपरिहाराय भगवान् यादृच्छिकसुकृतादिकमपेक्षत इति भावः ॥ ७६ ॥

मदनेति—॥ मदनः कामः मत्सरः परोत्कर्षासहत्वं मानः गर्वः एतन्मयः एतत्प्रचुरः बहुभिः पिशाचैः गृहीतार्भक इव स्थितः पुमान् निगमसिद्धः वेदान्तसिद्धश्च नागरिकश्च नराणां जीवानामिन्द्रश्शेषी । भगवान्मान्त्रिकश्च जीवान्प्रतिभगवतश्शेषित्वं तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं । सकारणं कारणकारणाधिपो ज्ञाज्ञौद्वावजावीशनीशौ । इत्यादिश्रुतिसिद्धं । तस्य निरीक्षया कटाक्षेण निपुणां समीचीनां निपुणानां वा पद्धतिं मार्गं अभ्यवपद्यते प्राप्नोति । भगवत्कटाक्षणाद्वेषादिकामाचार्यप्राप्तिपर्यन्तानां निपुणपद्धतिं प्राप्नोतीत्यर्थः ॥ ७७ ॥

अनघदेशिकेति—॥ अनघस्य मन्त्रान्तरसाधनान्तर देवतान्तरप्रावण्यरूपदोषरहितस्य देशिकस्य दृष्टिरेव सुधा तया आप्लवे सेके विधिवशात् भगवत्कृपावशात् उपसेदुषि सति विमलः निर्मलः सचासौ बोधश्च सः मुखं आदिर्येषांते तथा अपवर्गसुखांकुर इत्यपि पाठः । विविधागुणाः परिणमन्ति सिध्यन्तीत्यर्थः ॥ ७८ ॥

अपि च

स्वाधीनेतरपातभीतिपरुषस्वर्वासदुर्वासना
पाशाकर्षणयन्त्रणाभिरभितः क्षिप्तात्मनः क्षेत्रिणः ।
निष्प्रत्यूहविजृम्भमाणकरुणा दुग्धार्णवे निर्भरा
भक्तिस्सेत्स्यति भागधेयवशतः प्राप्येपरे ब्रह्मणि ७९

अत्र चान्तरा सर्वस्वदक्षिणोऽयमध्वरः प्रवर्तते ।

यत्र तु

त्वया जुष्टः पत्न्या विधिवदिह यष्टा स्वयमहं
विधत्ते चार्त्विज्यं शमदमसुखोऽयं गुणगणः ।
अकस्मादुद्देश्यो भवति भगवानात्महविषः
पशुर्बद्धो मुक्तिं भजति विगलत्कर्मनिगलः ॥ ८० ॥

---

एवं भूतस्य भगवति भक्तिस्सेत्स्यतीत्याह ।

**स्वधीनेति–॥** स्वाधीनेतरः अस्वाधीनः कर्माधीनो यः पातः तस्मात् भीतिः तया क्रूरस्सचासौ स्वर्वास स्वर्गवासस्तस्मिन् दुर्वासना दुरभ्यासः सैव पाशः बन्धहेतुत्वात् पाशत्वरूपणं तेनाकर्षणं माकृष्टिः यन्त्रणाबन्धनानि ताभिरभितः परितः क्षिप्तात्मनः निरस्तधैर्यस्य क्षेत्रिणः निष्प्रत्यूहं यथा तथा विजृम्भमाणा करुणैव दुग्धं क्षीरं करुणाया दुग्धत्वरूपणं भोग्यता प्रकर्षसूचनार्थं । तस्यार्णवे अपरिच्छिन्ने स्थाने प्राप्य पर ब्रह्मणि निर्भरा निबद्धा भक्तिः भागधेयवशतः सेत्स्यति ॥ ७९ ॥

अत्रान्तरा अस्मिन्मध्ये सर्वस्वं दक्षिणा यस्मिन् स तथा । अस्मिन्नध्वरे पत्नी यजमानऋत्विगुद्देश्यहविः पशून् दर्शयति ।

**त्वयेति–॥** विधिवत् विधिश्शास्त्रं तदुक्तप्रकारेणेत्यर्थः आत्महविषः आत्मरूपहविषः **आत्मनोहाविष्टुंहविर्गृहीत्वात्मरूपं वसुरण्येति** मन्त्रतः। मन्त्रोक्तं अकस्माच कस्मैचिदपि फलायेत्यर्थः उद्देश्यः उद्देश्यदेवता भवति बद्धः प्रकृत्या बद्धः पशुः पुरुषःविगलत्कर्मनिगलः कर्मैव निगलं यस्य सतथा मुक्तिं भजति ॥ ८० ॥

अत्रायमध्वरः। **समित्साधनकादीनां यज्ञानां न्यासमात्मनः । नमसायोऽकरोद्देवे सस्वध्वरउदीरितः ।** इत्युक्त आत्मसमर्पणरूपस्तस्यैव स्वध्वरत्वकथनात्। उपरितन श्लोके च तस्यैव वक्ष्यमाणत्वात्। ननु सत्रान्तरे यूपे बद्धस्य पशोस्संज्ञपनं दृश्यते अस्मिन्नध्वरे बद्धस्य पशोः कथं मुक्तिः दुरितविगलनं च कथमित्यत आह ।

इदमप्यत्र भवत्या भावनीयं

स्वरक्षणभरार्पणक्षणिकसत्रिणः क्षेत्रिणः
प्रवर्त्य कृपयास्थितिं प्रभुरभूतपूर्वोदयाम् ।
जगद्विपरिवर्तनप्रथितनित्यशक्तिस्स्वयं
क्षिपत्यपुनरङ्कुरं दुरितमस्य लक्ष्मीपतिः ॥ ८१ ॥

सुमतिः—* अं अउंत एवं णामवंणिंजंती ओवंगदसापुरुसंस कइआ होहिइ।

राजा—देवि त्रैकाल्यवेदिनि, दुस्सहानादिदुःखसागरनिमग्नस्य यथागमं यथान्यायञ्च केनचित्कारणेन समुत्तारस्संभविष्यतीति सन्तोष्टव्यन्तावत् ।

इह हि

निरपायदेशिकनिदर्शितामिमां
कमलासहायकरुणाधिरोहणीं ।

* आर्यपुत्र एवं नाम वर्ण्यमानापवर्गदशा पुरुषस्य कदा भविष्यति ।

स्वरक्षणेति—॥ स्वस्य रक्षणं स्वरक्षणं प्रकृतिविमोकपूर्वकभगवत्प्राप्तिरूपं तस्मिन् यो भरः तस्य अर्पणं न्यासः क्षणकालसाध्यं क्षणिकं तच्चेदं सत्रं च तदेव क्षणिकं सत्रमस्यास्तीति तथा तस्य क्षेत्रिणः अभूतपूर्वं उदयो यस्यास्तां स्थितिं प्रवर्त्य प्रवर्तयित्वा जगतां विपरिवर्त्तनं संहारः संहृतस्य जगतः पुनस्सृष्टिर्वा तेन प्रथिता नित्या शक्तिर्यस्य स तथा जगद्विपरिवर्त्तनेन प्रथितनित्यशक्तित्वं परमात्मन एव । असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मानं स्वयमकुरुत । सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयं । तदैक्षत बहुस्यां प्रजायेयेति तत्तेजो सृ जत सोकामयत बहुस्यां प्रजायेयेति सतपो तप्यत । सतपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किञ्च । परास्य शक्तिर्विविधैव श्रूयते । स्वाभाविकीज्ञानबलक्रिया च इत्यादि श्रुतिभ्यस्तथावगमात् । एवं भूतो लक्ष्मीपतिः अस्य दुरितं अपुनः अंकुरं यस्मिन् कर्मणि तद्यथाभवति तथा क्षिपति अभूतपूर्वोदयां स्थितिं प्रवर्त्येति मुक्तिं दुरितं क्षिपतीति कर्म विगलनं च करोति । भगवानित्यनेन । एतदध्वरयोरध्वरान्तरपशुभ्यो व्यावृत्तिस्सूच्यते ॥ ८१ ॥

भूतभविष्यद्वर्त्तमानास्त्रयः कालास्त्रैकाल्यं तद्वेदिनी । आगमश्शास्त्रं न्यायो युक्तिस्तद् द्वयमनतिक्रम्य केनचित्प्रकारेणोत्युक्तमेवाह ।

निरपायेति— निरपायाः अपायरहिताः अपायशब्दोत्र निष्टाहानिहेतुभूतमुपायापायं दर्शयति । यथोक्तं

उपायापायसंयोगेनिष्टयाहीयतेनया ।
अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत् ॥
प्रायश्चित्तिरियं सात्र यत्पुनश्शरणं व्रजेत् ।
उपायानामुपायत्वस्वीकारेप्येतदेव हि ॥ इति ॥

क्रमशोऽधिरुह्य कृतिनस्समिन्धते
परिशुद्धसत्वपरिकर्मिते पदे ॥ ८२ ॥

अपि च

स्वयमुपशमयन्ती स्वामिनः स्वैरलीलां
स्वमतमिह दुहाना स्वादु पथ्यं प्रजानां ।
नियतमिदमिदानीमन्यदा वा भवित्री
निरवधिसुखसिध्यै निष्प्रकंपानुकंपा ॥ ८३ ॥

इयं हि

---

तेच ते देशिकाश्च तैः निदर्शितां नितरांप्रकाशितां इमां कमलासहायस्य करुणैवाधिरोहणी निश्रेणिका तां कृतिनः कुशलाः स्वाधिकारानुगुणकर्मज्ञानादिविमुखाः प्रपदनैकप्रवणा इत्यर्थः । क्रमशोधिरुह्य परिशुद्धं रजस्तमोभ्यामस्पृष्टं यत् सत्वं तेन परिकर्मिते अलंकृते पदेस्थाने समिन्धते वर्धन्ते अविच्छेदेन भगवदनुभवं कुर्वन्तीत्यर्थः ॥ ८२ ॥

एवंभूता भगवत्कृपावश्यं भवित्रीत्याह ।

**स्वयमिति**—॥ स्वामिनस्सर्वेश्वरस्य स्वैरलीलां स्वच्छन्दलीलां स्वतन्त्रो हि भगवान् कदाचित् जीवात्मनामपराधभूयस्तामवलोक्य ।

उपकारशतेनापि न क्षमामि वसुन्धरे ।
तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ॥
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिं ।

इत्युक्तरीत्या लीलापरो भवति सैव स्वैरलीला तामुपशमयन्ती स्वादुभोग्यं पथ्यं हितं च स्वमतमुपायविशेषं भगवदनुभवं वा स्वादु निरतिशयानन्दरूपां भक्तिं पथ्यं भगवत्प्राप्तिहेतुतया हितरूपां प्रपत्तिं वा दुहाना जनयन्ती । निष्प्रकंपा अचंचलानुकंपा सुखस्य निरतिशयानन्दरूपस्य भगवदनुभवस्य सिद्ध्यै इदानीमन्यदा कालान्तरे वा भवित्री नियतं निश्चितं ॥ ८३ ॥

अस्या भगवत्कृपायाः अनन्तकतिपयगुणवत्ता प्रकटनाय वर्तिनीत्वं प्रतिपादयति ।

अविरलगुणच्छायामायातमःप्रतिरोधिनी
परिहृतरजःपङ्का तापैरसङ्घटिता त्रिभिः।
मधुरिपुदयामूर्तिर्दिव्या निराकृतकण्टका
वहति निगमाद्वर्तन्येका पुरीमपराजिताम् ॥ ८४॥

सुमतिः— * अंअउत्त अपरिमिअ दुरिअ भरिअंसजन्तुणो दुःखसाअरादो उत्तारवअणं बालअण संतोसवअणं विअ उवच्छन्दणत्ति पेक्खामि।

राजा—भद्रे अबाधितार्थग्राहिणि, मास्म मिथ्यादृष्टिमुपतिष्ठ। सुमतिः खल्वसि। अपिदृष्टः क्वचिदाप्तागमस्य बाधः ऐश्वरस्य वा भक्तजनसंरक्षणप्रतिज्ञानस्य।

* आर्यपुत्र अपरिमितदुरितभरितस्य जन्तोर्दुःखसागरादुत्तारवचनं बालजनसन्तोषवचनमिव उपच्छन्दनमिति पश्यामि।

अविरलेति—॥ छायावत्त्वा तपराहित्य तापरजःपंककण्टकविधुरत्वादयः समीचीनमार्गगुणाः ते सर्वेप्यस्यास्सन्तीति पदवीत्वं व्यज्यत इति भावः। अविरलाः निबिडाः गुणाः शैत्यमार्दवादय एव छाया यस्यास्सा तथोक्ता मायाप्रकृतिस्सैव तमः। तमोवदपथप्रवृत्तिहेतुत्वेन मायायास्तमस्त्वं। तस्य प्रतिरोधिनी नाशिनी रजः रजोगुण एव पंकः परिहृतो रजः पंको यस्यास्सा तथोक्ता त्रिभिः तापैः आध्यात्मिकाधिभौतिकाधिदैविकरूपैः असंघटिता असंयुता (असंवलितेति वा पाठः) मधुरिपोर्दयैव मूर्त्तिश्शरीरं यस्यास्सा तथा दिव्या विलक्षणा निराकृताः निरस्ताः कण्टकाः यस्यास्सा तथा। अत्र कण्टकशब्देन ऐश्वर्यकैवल्ये प्रतिपाद्येते कण्टको हि महापथे गच्छतां तमपहाय मार्गान्तरगमनहेतुः एषा वर्त्तिनी एकपदी निगमात् नगरात् वेदान्ताच्चापराजितां विरोधिभिरनभिभूतां पुरीं अपराजिताख्यां पुरीं नगरीं वहति प्रापयति। अपराजितेति वैकुण्ठनगर्या एव नाम। यायोध्येत्यपराजितेति विदिता नाकं परेण स्थितेत्यभियुक्तोक्तेः। लोके हि मार्गः कस्माच्चिन्नगराचगर्यन्तरं प्रापयति। तद्वदियमपि वेदान्तान्निर्गत्य वैकुण्ठनगरीं प्रापयतीति भावः ॥ ८४ ॥

प्रच्छन्दनं प्रतारणं।

अबाधितार्थग्राहिणी प्रमाणान्तरप्रतिपन्नस्वभावमर्थं गृह्णातीत्यबाधितार्थग्राहिणी। मिथ्यादृष्टिर्नास्तिक्यं। आप्तागमस्याप्तत्वादेवबाधा दर्शनं। ऐश्वरस्य ईश्वरसंबन्धिनः। भक्तजनसंरक्षणे प्रतिज्ञानस्य प्रतिज्ञायाः। एवं किल भगवता प्रतिज्ञातं

इयन्ते प्रत्यायना ।

शपे दैष्टिक्येन स्वयमिह भवत्या च सुमते
त्वयैव द्रष्टव्यः स्वपनविगमोन्मीलितधिया ।
अहङ्कारग्राहग्रहकदनसाक्रन्दतनुभृ-
न्मुमुक्षासंरब्धो मुरमथनसङ्कल्पमहिमा ॥ ८५ ॥

अथवा–साधारणश्चायमाश्रितसंरक्षणसमारम्भः ।

तथा हि

दीनो दृप्यतु वापराध्यतु परं व्यावर्ततां वा तत-
स्त्रातव्यश्शरणागतश्शकनतः सद्भिस्तथा स्थाप्यते ।

---

मित्रभावेन संप्राप्तं न त्यजेयं कथंचन ।
दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितं ॥
विभीषणो वा सुग्रीव यदि वा रावणस्स्वयं ।
आनयैनं हरिश्रेष्ठदत्तमस्याभयं मया ॥
सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥
अहंत्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुचः ॥

इत्यादौ अत्रापि बाध इत्यनुषज्यते ।

प्रत्यायना शपथः तामेवाह ।

**शप इति–॥** दैष्टिक्यमास्तिक्यं तेन भवत्या च शपे शपथं करोमि सुप्तस्य सुप्तेर्विगमनेन निवृत्या उन्मीलिता प्रकाशमाना धीर्यस्यास्तया त्वया एवं वक्ष्यमाण-प्रकारेण द्रष्टव्यं । अहंकार एव ग्राहः नक्रः तेन ग्रहः ग्रहणं तेन यत्कदनं पीडा तेन साक्रन्दः सप्रलापः यस्तनुभृत् शरीरी तस्य मुमुक्षायां मोक्षणेच्छायां संरब्धः उद्युक्त इत्यर्थः ये सकृदाश्रितास्तेषां संरक्षणसंकल्पस्सर्वसाधारणः ॥ ८५ ॥

किमुत भगवत इत्याहाथवेति ।

**दीन इति–॥** दीनोवास्तु दीनः आर्त्तः दृप्यतु विलंबसहोवास्तु परं अपरा-ध्यतु विरोधमेव वा करोतु विरोधाद्व्यावर्ततां व्यावृत्तो वास्तु शरणागतः शकनतः शक्तितः त्रातव्यः रक्षितव्यः विश्वामित्रादिभिस्सद्भिः एष घण्टापथः तथा स्थाप्यते प्रतिष्ठाप्यते ननु प्रसिद्धं खल्वेतदिति भावः विश्वामित्रेण शुनश्शेफश्शरणागतो रक्षितः कपोतेन स्वनीडाभ्याशे पक्षितो व्याधः राघवेण विभीषणः रघुणा कश्चिद्ब्राह्मणः

सुमतिः-( दीर्घंनिश्वस्य ) * णाहतहवि अज्जवि किंहोज्जत्ति तरलहिअआ किंभणामि पच्चएण आरिणोखु राअद्देसाओ ओसरं पेक्खर्दि

विवेकः-भीरु मातिभूदिह मनोदौर्बल्यं किमस्माकमपिसंनिधौरागद्वेषयोरवकाशः।

अपिच,

अनुचितपदवीभिश्चिन्तयित्वाप्रयाता
न्यलमलमतिमात्रैरद्यबाले विषादैः।
उपनिषदमुदारामुद्धमन् क्वापिलक्ष्ये
शरणमुपगतान्नस्त्रायतेशार्ङ्गधन्वा ॥ १४ ॥

सुमतिः-( सविषादं संस्कृतमाश्रित्य ) आर्यपुत्र,

सर्गेषु प्रतिसंचरेषु बहुशस्वर्गेतथादुर्गतौ
जाग्रत्स्वप्नसुषुप्ति मुग्धि मरणावस्थासुदुस्थासु च।

* नाथ, तथापि अद्यापि किं भवेदिति तरल हृदया किं भणामि प्रच्छन्नचारिणौ खलुराग द्वेषावसरं प्रेक्षेते।

समाश्वासः कुत इत्यत आह परेति-।

परप्रयुक्तयोः परेणशत्रुणा महामोहेन प्रेषितयोः पाटच्चरयोः तस्करयोः रागद्वेषयोः अपनोदनेन निरसनेन मनोदौर्बल्यं माभूत्कुत इत्यत आह किमस्माकमिति-।

हेत्वन्तरमाह-

अनुचितेति-॥ हे बाले अनुचितपदवीभिः स्वर्गनरकादिमार्गैः निरतिशयानन्दलक्षणपरमपुरुषचरणसरोजपरिचर्योचितस्य पुरुषस्य स्वर्गादि पदव्योनुचिता एव ताभिः प्रयातानि यातायातानि चिन्तयित्वा अतिमात्रैरधिकैः विषादैरलं विषादो न कार्य इत्यर्थः क्वापि लक्ष्ये अर्जुनरूपे क्वचिद्विषये उदारां निरतिशय पुरुषार्थरूपमोक्षप्रदामुपनिषदं गीतोपनिषदमुद्धमनुपदिशन शार्ङ्गधन्वा शार्ङ्गं धनुर्यस्यस शरणमुपगतान् शरणागतानः अस्मान् त्रायते रक्षति। अतस्ते मनोदौर्बल्यं माभूदितिभावः॥ १५॥

विषादातिशयेन स्वस्वभावं विस्मृत्य संस्कृतभाषया सुमतिर्वदति आर्यपुत्रेति।

सर्गेष्विति-॥ सर्गेषु सृष्टिषु प्रतिसञ्चरेषु प्रलयेषु स्वर्गे दुर्गतौ नरके दुस्थासुदुःखरूपासुजाग्रदाद्यवस्थासु च दुःख्यन्दुःखमनुभवन् प्रस्तरवच्चभवन् सुखाद्य-

दुःखयन् प्रस्तरवद्भवन् बहुपशुः सुःखयन्नसौ देहभृद्
दग्धादग्धसजीवितद्रुमदशादीनोदरीदृश्यते ॥१५॥

अपिच,

विचित्रजवविश्वकृद्विहृतिमारुतप्रेरणा
विभक्त भवितव्यताविपिनसिन्धुविष्फूर्तिभिः ।
जटालवृजिनाविलेजवनयौवनास्वादने
जरामरणभीषणेजगतिजन्तुरावर्त्यते ॥ १६ ॥

विवेकः–( सानुशयं ) देवि सत्यमिदमितः पूर्वं, अद्य खलु अपुनरावर्त्तनी-
मारुरुत्ततः पुरुषस्य चिरकालसंचितपुण्यसंचयविशेषमाकर्णय·

पातत्रासनिरीक्षणप्रशमितस्वर्वासदुर्वासना
पुंसस्संप्रतिशेमुषीनिरवधिंपुष्णातितृष्णांपरे ।

नुभवाभावात् पाषाणकल्पोभवन् बहुपशुः हिताहितविवेकापायात् पशुसमः सुख्य
न्सुखमनुभवन्नसौ देहभृत् दग्धश्चादग्धश्च सजीवितो यो द्रुमः तस्य दशया दीनः
शोच्यः दरीदृश्यते क्वचित्प्रदेशे दग्धः प्रदेशान्तरे पत्रपल्लवाद्युपेतः अतएव अन्तरार्द्र
तरुर्यथा शोच्योभवति तथायमपि पुरुषोतिशोच्यो दृश्यतइति हृदयं ॥ १५ ॥

पुनरपि तदवस्थामेवाह अपिचेति–॥

विचित्रेति–॥ विचित्रः जवो यस्यास्सा तथा साचासौ विश्वकृद्विहृतिश्च भगवल्लीलासैव मारुतस्तस्यप्रेरणया विभक्तायाः भवितव्यतायाः विपिनजालं तदेव सिन्धोः समुद्रस्य विष्फूर्त्तिभिः जटालानि परस्परानुबद्धानि वृजिनानिपापानि तैरा-विले संक्षुब्धे जवनं वेगवत् अस्थिरं यौवनस्यास्वादनं यस्मिन् तस्मिन् जरामरणाभ्यां भीषणे एतद्द्वयोपादान मन्येषां रोगादीनामप्युपलक्षणं जगति आवर्त्यंते पुनः पुनः आवर्त्य मानाः क्रियते ॥ १६ ॥

अपुनरावृत्तिं पुनरावृत्तिर्नविद्यते यस्यां तां वर्तनीं पदवीमारुरुक्षतः आरोढुमिच्छतो मुमुक्षोरित्यर्थः चिरकालसंचितेन पुण्यसंचयेन परिणतां तमेवाह–

पातेति–॥ पातः पतनं तस्मा त्रासः भयं तस्य निरीक्षणेन स्वर्गेपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः इत्युक्तेः स्वर्गे वसतोपि पातभयमस्तीत्यवगम्यते तदवलोकनेन प्रशमिता स्ववासदुर्वासना स्वर्गवास दुर्वासना यस्यास्सा तथा पुंसःशेमुषी बुद्धिर्निरवधिं तृष्णां परे सर्वाधिके पुंसि पुष्णाति वर्धयति मतिकश्मलं बुद्धि·

अर्थित्वे मतिकश्मलप्रचलितेप्येवंप्रतिष्ठापिते
सामर्थ्यंचसमाधिसीम्निनियतावस्थंव्यवस्थाप्यते॥१७

अपिच,

प्रतिक्षिप्तावद्यप्रवरगुणनिर्धारणभुवा
परप्रेम्णाजुष्टोभवभृदधुना भाग्यवशतः ।
अभिन्नास्वादानाममृतलहरीणामिवधियां
विकल्पंविज्ञाताविधिपवनवैषम्यजनितम् ॥ १८ ॥

अयंचपरमपुरुषचरणारविन्दमकरन्दमधुकरो वृन्दारकनगरमपिनरकमिव परं निश्चेष्यति ।

अत्रच,

भवपथकथारागेभग्नेगतागतचिन्तया
परमपुरुषप्रेप्सालाभेतदद्भुतबोधनात् ।

---

चांचल्यं अक्षय्यंहवै चातुर्मास्ययाजिनस्सुकृतंभवति इत्यादिश्रवजनितमतिक्षोभो प्रचलितोऽप्यर्थित्वे एवं स्वर्गपातत्रासनरीक्षणेन प्रतिष्ठापिते सति समाधिसीम्नि सामर्थ्यं च नियतावस्थं नियता निश्चला अवस्था अवस्थानं यस्य तत्तथा व्यवस्थाप्यते अनेनास्य मुमुक्षा समाधौ सामर्थ्यं च सिद्धमिति द्योत्यते ॥ १७ ॥

उपायानुष्ठानं च भविष्यतीत्याह प्रतिक्षिप्तेति–॥

प्रतिक्षिप्तेति–॥ प्रतिक्षिप्तानिनिरस्तानि अवद्यानि दोषा येषां ते प्रतिक्षिप्तावद्याः हेयप्रतिभटा इत्यर्थः तेचते प्रवरगुणाश्चेति कर्मधारयः प्रवरगुणाः कल्याणगुणाः तेषां निर्धारणेन निश्चयेन भवतीति निर्धारणभूः तेन परप्रेम्णा परस्मिन ब्रह्मणि प्रेम्णा भक्तिरूपेन भाग्यवशतः अधुना जुष्टो भवभृदभिन्नः एकरूपः आस्वादः भोगरसः यासांतासां अमृतलहरीणां अमृतप्रवाहानामिव भोग्यभूतानां धिया ज्ञानानां विधिः ध्यायीत उपासीतेत्यादिरूपः स एव पवनः तस्य वैषम्येण भेदेन जनितं विकल्पभेदं विज्ञाता ज्ञास्यति नानाशब्दादिभेदादिति सूत्रकारेणोक्तं विद्यानां नानात्वं ज्ञास्यतीतिभावः ॥ १८ ॥

इतः परमस्य स्वर्गाभिलाषो न भविष्यतीत्याह अयंचेति–। उक्तं ह्येतत्

एते वै निरयास्तात स्थानस्य परमात्मनः । इति

अयमिदानीं सिद्धां साध्यां सत्त्वसंवेत्याह अत्रचेति–॥

गुणगणभिदासंभेदाभ्यामुपस्कृतविग्रहे
क्षममिहपरंविद्यावर्गैर्विमोहनिवर्तनम् ॥ १९ ॥

इह च मोहप्रशमनंदिङ्मात्रेणोदाहरामि

समानामुक्तिश्चेन्नखलुघटतेसाधनभिदा
नचेत्स्वर्गन्यायस्तरतमतयान्याभिमतया ।
प्रमाणप्रागल्भ्यप्रणिधिमवधूयप्रलपता
मतिक्षीबः क्षोभस्स्वमतिविहतेरेवनिहतः ॥ २० ॥

एवमपि ये मुह्यन्तितेमुह्यन्त्येव नखलुसहस्रैरपि सलिलकुम्भैर्बलिभुजः प्रक्षाल्यमानावलर्क्षतांप्रतिपद्यन्ते दुर्वादिगर्वसर्वस्वनिर्वापकैस्सर्वज्ञबुद्धिवेदिभिर्वर्णितं निर्विशङ्कमखिलमधिगम्यसर्वेश्वरंनिर्विशन्तिसन्तः—

---

भवेति—॥ गतागतचिन्तया नायस्वमियस्वगतागतं कामकामालभन्ते इत्यादि प्रमाण बलादस्य पुरुषस्य गतागत चिन्तया भवपथः संसारमार्गः तस्य कथाप्रसंगः तद्विषये रागे भग्ने सति तस्य परमपुरुषस्याद्भुतमाश्चर्यरूपं यद्गुणशीलादिकं तस्य बोधनात् ज्ञानात् परमपुरुषप्रेप्सायाः परमात्मप्राप्तीच्छायाः लाभेसति गुणानामानन्दादीनां गणस्य भिदासंभेदाभ्यां भिदाभेदः अनुपसंहारः संभेदः उपसंहारः ताभ्यामुपस्कृत विग्रहे उपस्कृत स्वरूपे विद्यावर्गै विमोहनिवर्तनं परं क्षमं युक्तं विमोहः भ्रमः तन्निवर्तनमेव कर्तुं युक्तमितिभावः ॥ १९ ॥

अत्रपूर्वपक्षिणोयमभिप्रायः मुक्तिस्तावदेका वा उतानेका आद्ये कल्पे साधन बहुत्वं नस्यात् एकेनैव साध्यसिद्धौ साधनान्तराणां वैयर्थ्यं स्यात् द्वितीये स्वर्गस्येव मुक्तेरपि तारतम्यं स्यादिति एतद्दूषयितुमनुवदति—

समानेति—॥ मुक्तिः तत्तद्विद्याभिः साध्यामुक्तिः समाना एकाचेत् साधन भिदा साधनानामुपकोसलविद्या सद्विद्या दहरविद्यादीनां भेदः नघटते खलु वैयर्थ्यात् इत्यर्थः एका नचेत् अन्याभिमतयामीमांसकाभिमतयातरतमतया स्वर्गन्यायः प्रसज्जेतेति शेषः परिहरति प्रमाणेति—। प्रमाणानां प्रागल्भ्यं धार्ष्ट्यं तद्विषयं प्रणिधिं चिन्तामवधूयापहाय प्रलपतामिति उक्तप्रकारेण क्षीबैरज्ञैः कृतः क्षोभः स्वमतिविहतेः मुक्तेरेकत्वे साधन बहुत्वस्य वैयर्थ्यात् साधन बाहुल्येन स्वर्गस्येवास्यामुक्तेरपि बहुत्वमंगीकरणीयमिति या स्वमतिः तस्याः निरञ्जनः परमं साम्यमुपैतीत्यादि प्रमाण बलात् विहतेरेवहेतोः निहतः प्रतिक्षिप्तः ॥ २० ॥

सुमतिः–( सश्लाघं ) * णाह, पडिट्ठाविग्रम्हि दाणिंपमाणप्पण-अपेसलेन तुह्म भासिएण, पडिबुद्धजण संभावणिज्जेपमाण उत्तन्दणिक्खणंमिसमब्भहिअदरिद्दं खुतुह माहप्पं, दाणिं किल ।

कप्पारम्भपअण्डतण्डवकला कीलन्तकालान्दअ
क्खोहुव्वेलकवन्द सिन्धुलहरी धूअन्तचन्दप्पहं ।
एक्कक्खरणिअणिब्भरसुहासन्दोहसन्तोसिआ
आमेल्लन्दि भुअङ्गिआतुह जसम्वेलन्तसेलन्दरे ॥ २१ ॥

* नाथ प्रतिष्ठापितास्मि इदानीं प्रमाणप्रणयपेशलेन युष्मत् भाषितेन प्रतिबुद्धजनसम्भावनीये प्रमाणवृत्तान्तनिरीक्षणे समाधिकदरिद्रं खलु तवमाहात्म्यं ।

इदानीं किल ।

कल्पारम्भ प्रचण्डताण्डवकला क्रीडमानकालान्तक
क्षोभोद्वेलकपर्दसिन्धुलहरी धूयमानचन्द्रप्रभं ।
एकैकाक्षर निर्यन्निर्भरसुधासन्दोहसन्तोषिता
आम्रेडन्ति भुजङ्गिकास्तवयशोवेलान्तशैलान्तरे ॥

अतीन्द्रियेष्वर्थेषु श्रुतमेव प्रामाण्याद्यथाश्रुतमेव कल्पनीयमिति मुह्यन्त्येवेति–। किमुक्तं मोहोनिवार्यतामित्यत्राह न खल्विति–।

अतएव अर्थस्थितिरित्याह दुर्वादीति–।

दुर्वादिनां गर्वसर्वस्व निर्वापकैः निवर्तकैः सर्वं जानातीति सर्वज्ञाबुद्धिर्येषां तैः निर्वर्णितं निष्कृष्यवर्णितं सर्वेश्वरं निर्विशङ्कमधिगम्यनिर्विशन्ति ।

नाथप्रतिष्टापितास्मीत्यादि-प्रतिबुद्धाः ज्ञानिनः तेच तेजनाश्च तैस्संभावनीये प्रमाणानां वृत्तान्तः प्रवृत्तिस्तस्य निरीक्षणे समाधिकाभ्यां दरिद्रे रहितं ।

कल्पारंभेति–॥ कल्पस्य प्रलयस्यारंभेप्रचण्डमुद्धतं यत्ताण्डवं तस्य कलया विद्यया क्रीडन् यः कालान्तकः रुद्रः तस्य क्षोभेण उद्वेलाउत्कूलाकपर्दे; तस्य जटाचूडे या सिन्धुर्गंगा तस्यालहरीभिः धूयमानस्य चन्द्रस्य प्रभेव प्रभा यस्य तत्तव यशः एकैका क्षरेभ्य निर्यान्ति निर्भरानिबिडा च या सुधा तस्यास्सन्दोहैः निष्यन्दः सन्तोषिताः आनन्दिता भुजङ्गिकाः वेलान्तेषु समुद्रतीरान्तेषु येशैलाः तेषामन्तरे आम्रेडन्ति पुनः पुनः गायन्तीत्यर्थः ॥ २१ ॥

विवेकः-अयि भीरु अवधारितपरमार्थापि किंपचानमानसेवकिं पुनरप्यतिशङ्कसे शृणुष्वचैतत् ।

विषमधुबहिष्कुर्वन्धीरोबहिर्विषयात्मकं
परिमितरसस्वात्मप्राप्तिप्रयासपराङ्मुखः ।
निरवधिमहानन्दब्रह्मानुभूतिकुतूहली
जगति भविता दैवात्कश्चिज्जिहासितसंसृतिः ॥२५॥

निस्संशयः खलु पटुभिरपिविटपमारोहद्भिरप्राप्तानां पचेलिमानां फलानामयतमानस्यापिसुकृतपरिपाकेन पान्थजनस्यपुरतः परिपातः ।

अपि च ।

विवित्सति यदिस्वयं किमपि सूरिसेव्यं पदं
कृतस्ययदिनिष्कृतिर्यदिकरिष्यते नाहितं ।

किंपचानं क्षुद्रं मानसं यस्याः सा तथा एतदुच्यमानं शृणु । किंतदित्यत आह विषेति-॥ बहिर्विषयाश्शब्दादयः तदात्मकं तत्स्वरूपं विषमधु विषसंसृष्टमधु अत्यल्पसुखंमनर्थावहं चेति हृदयं बहिष्कुर्वन् नसेवमानः अनेन पशुपुत्रादिकमैहिकमामुष्मिकं स्वर्गादिकं च त्याज्यमिति प्रत्यपादि परिमितरसस्य भगवदपेक्षया शेषत्वपारतन्त्र्याद्यनुभवमहानन्दरसविधुरस्य स्वात्मनः प्राप्तौ प्रयासाद्यत्नात्पराङ्मुखः परावृत्तः निरवधिः अवधिरहितः महानन्दो यस्यां तस्यां ब्रह्मानुभूतौ कुतूहलो इच्छावान् जिहासितत्यक्तुमिष्टा संसृतिः संसारो येन स तथा कश्चित्पुरुषः दैवाज्जगति भविता ॥ २५ ॥

दैवादित्युक्तमेव सदृष्टान्तमाह निस्संशयइति । दृष्टान्तबलेनास्य सामर्थ्ययज्ञादिकमकिंचित्करं भगवत्कृपैव तत्प्राप्तिहेतुरिति व्यक्तं विवित्सादिसंभवे मुक्तिस्स्यतीत्याह अपिचेति ।

विवित्सतीति-॥ किमप्यवाङ्मनसगोचरं सूरिसेव्यं नित्यमुक्तानुभाव्यं

यत्र पूर्वे साध्यास्सन्ति देवाः ।
सदापश्यन्ति सूरयः ॥

इत्यादि श्रुतेः पदं स्थानं स्वयं यदि विवित्सति लब्धुंवांछति कृतस्य पापस्येति शेषः निष्कृतिः प्रायश्चित्तं यदि क्रियते यदि अहितं प्रातिकूल्यं करिष्यते नयदि विषर्म-

निसर्गसुहृदीश्वरो यदिहलक्ष्यमन्वीक्षते
किमत्रपरमुच्यते किमितिनात्मविन्मुच्यते॥ २६ ॥

सुमतिः—

* णाह जंएव्वं तुए दिण्णहत्थो संसारसाअरं अइलङ्घेइपुरुसोमे ताकहंदवदहणपज्जलिअपस्सजुअलदारुअरगअव्वकीडो सारमेअगण परिगओव्व सारंगोसमीरणंदोलणडोलाअन्तपोओदरगओव्वसंजत्तिअसत्थो महप्पवाहमज्झणिरोहसंभंतणअणोव्व जंबुओ विसहरपरिगहिअ घरघुंतहिअओव्व कुडुम्बिअणो वियडअरभङ्गसंभमसंखुहिअगंगाअडवेपंतसंहणणोव्वसाहिमण्डलो राहवसरणिअरक्खोहिअरअणाअरमज्झट्ठिओव्वमच्छसंघाओ सध्धसगहिओ होइ ।

---

* नाथ यद्येवंत्वयादत्तहस्तस्संसारसागरमतिलंघतेपुरुषः तत्कथं दवदहन प्रज्वलितपार्श्वयुगलदारुदरगत इवकीटः सारमेयगण परिगतइव सारङ्गः समीरणान्दोलनडोलायमान पोतोदरगत इव सांयात्रिकसार्थः महाप्रवाहमध्यनिरोधसंभ्रान्तनयन इव जम्बुकः विषधरपरिगृहीतगृह घूर्णमानहृदय इव विकटतरभङ्गसंभ्रमसंक्षुभितगङ्गातटक्षेपमानसंहनन इव शांखिमण्डलः राघवशरनिकरक्षोभित रत्नाकरमध्यस्थित इवम त्स्यसंघातः साध्वसगृहीतो भवति ।

---

सुहृत्स्वभावसुहृत् सुहृदं सर्वभूतानामिति स्मृतेः ईश्वरः भगवान् लक्ष्यं व्याजमन्वीक्षते यदि आत्मवित् परावरतत्वयाथात्म्यवेदी किमिति न मुच्यते कुतो हेतोर्नमुच्यते मुच्यतएवेत्यर्थः । अत्रास्मिन्नर्थे परमन्यत्किं किंवोच्यते न किंचिद्वक्तव्यमिति भावः ॥ २६ ॥

दव दहनेन वन वह्निना प्रज्वलितं पार्श्वयुगलं यस्य तस्य दारुणः उदरमभ्यन्तरं गतः कीटः कृमिविशेष इव सारमेयाणां शुनां गणेन परिवृत्तः सारंगः हरिणः समीरणेनान्दोलनं चालनं तेन डोलायमानस्य पोतस्योदरगतः सांयात्रिकाणां पोतवणिजां सार्थस्समूहः महतः प्रवाहस्य मध्ये निरोधेन संभ्रान्ते नयने यस्य स तथा जंबुकः फेरुः विषधरेण सर्पेण परिगृहीते गृहे घूर्णमानं हृदयं यस्य स तथा कुटुंबि पुत्रपोत्रादि समेतो जनः विकटतरमतिशयेन विशालं यस्यतटं तस्यभंगे पातने यस्संभ्रमस्तेन संक्षु

विवेकः- भद्रे पाण्डित्यमपि निर्विद्यबाल्येन तिष्ठसि यन्मोक्ष्य-माणमपिमुक्तमिव अभिमन्यसे पश्य पश्य ।

वर्णितगुणप्रकर्षावर्णाश्रमनियमदेशकालमुखाः ।
अनवहितमानसानां भवन्तिनित्यं भयोदयस्थानम् ॥ २७ ॥

अन्येषुतुविशेषंबोधयामि

भयाभयस्थान विशेषवेदिनः
प्रमादमुक्तस्यपरीक्ष्यकारिणः ।
परानुभूतिप्रतिबन्धशंकया
भयानुबन्धोप्यभयायकल्पते ॥ २८ ॥

---

भितायाः गंगायास्तटेवेपमान संहननः कंपमानशरीरः शाखिनां वृक्षाणां मंडलमध्यः साध्वसेन भयेन गृहीतोभवति ।

पाण्डित्यं निर्विद्यबाल्येतिष्ठासेदिति । कुत एतदुक्तमित्यत आह यदिति-मोक्ष्यमाणस्यप्रामादिकाकृत्य करणादिसंभावनयाभिव्यज्यतइति । जानत्यपि अजाना-तीव भाषसे इति भावः । मुक्तस्य हि भयाभावः अथसोऽभयंगतोभवतीति श्रुतेः

अत्राभिप्रेतमर्थं विशदयति-

**वर्णित इति-॥** वर्णितः प्रशंसिता गुणस्य मुक्तिसाधनत्वस्य प्रकर्ष अतिशयो येषां ते तथावर्णाः ब्राह्मणादयः आश्रमाः ब्रह्मचर्यादयः नियमाः धर्माः देशाः श्रीरंगादयः कालाः उत्तरायणादयः एते मुखानि प्रधानाः येषां ते देहादयः अन वहितमवधानरहितं मानसं येषां तेषां पुंसां भयोदयस्य भयोत्पत्तेः स्थानं भवति ॥२७॥

अन्येष्ववहितमानसेषु विशेषं बोधयामि । को विशेष इत्यत आह

**भयेति—**भयस्थानं काम्यं कर्म अस्य भयस्थानत्वं स्वफलानुभवद्वारामुमुक्षावेक्षक अनर्हत्वं अभयस्थानं नित्यनैमित्तिकादिकं कर्म इदं च भगवदाज्ञारूपत्वेनानुष्ठातृमु-मदनुग्रहहेतुत्वादभयस्थानं तयोर्विशेषं वेदितुं शीलमस्यास्तीति विशेषवेदी तस्य प्रमादैरनवधानैर्मुक्तस्य परीक्ष्य कारिणः उदर्कविचारपूर्वकं नित्यनैमित्तिकमात्रानुष्ठातुः परानुभूतेः परमात्मानुभूतेः प्रतिबन्धशंकया भयानुबन्धः भयानुवृत्तिरप्यभयाय मोक्षाय कल्पते समर्थोभवति भयानुबन्धः प्रमादराहित्यमापादयन् मोक्षाय भवतीति भावः ॥ २८ ॥

आमोक्षाच्च विदुषोपि निरनुबन्धाभीतिरिति नभःप्रसूनसौरभास्वादः ।

दिग्देशकाल करणाकरणादिरूपे
देहादिके च हितसाधनभावयोग्ये ।
दुष्कर्मपङ्क्तिमनुचिन्तयतोविचित्रां
किन्तद्यदस्यपुरुषस्यनभीतिहेतुः ॥ २६ ॥

सुमतिः—* एव्वं किल सव्वंवि जइ भअट्ठाणं ताकहं णिब्भअ णिप्पाअणिज्जं पणिहाणंसंपज्जइ ।

विवेकः-भद्रे संयगनुयुक्तं भवत्या, अस्ति खलु सूक्ष्मं किंचित् तदपि प्रतिपद्यामेवत्वां बोधयामि प्रतिसन्धीयतामिदं तावत् ।

---

* एवं किल सर्वमपि यदि भयस्थानं तत्कथं निर्भयनिष्पादनीयं प्राणिधानं संपद्यते ।

---

अत्र केचिदविभेति कुतश्चनेति श्रुतेः ब्रह्मवेदनानन्तरं विदुषोभयं न भवतीति वदन्ति तदनूद्य दूषयति आमोक्षादिति—॥

विदुषा ब्रह्मज्ञानवतः आमोक्षादाशरीरवियोगाच्चिरनुबन्धनिर्हेतुकाभीतिर्न खल्विति वचनं नभःप्रसूनसौरभास्वादः अत्यन्तासंभावितइत्यर्थः कुत एवमुच्यत इत्यत आह.

दिग्देशेति—॥ दिशः प्राच्यादयः देशाः कुण्डीरचोलादयः कालाः वसन्तादयः करणं नित्यनैमित्तिक कर्मणामकरणं काम्यकर्मणां आदिशब्देन समयाचारो गृह्यते एवंरूपे देहादिके च अत्र आदिशब्द इन्द्रिय वाची हितसाधनभावस्य मोक्षसाधनत्वस्य योग्ये विचित्रां दुष्कर्मपंक्तिं अनुचिन्तयतः अस्य पुरुषस्य यद्भीतिहेतुर्नभवति तत्किं न किमपीत्यर्थः । मोक्षसाधनतया प्रतीतेषु दिगादिषु दुष्कर्मवशात्कदा किं भविष्यतीति सर्वभय जनकं भवतीति भावः ॥

कालेष्वपि च सर्वेषु दिक्षुसर्वासुचाच्युत ।
शरीरे च यतीचापि वर्ततेमे महद्भयं ॥ इत्युक्तेः ॥ २६ ॥

प्रतिपद्यं ज्ञातमेवप्रतिसन्धीयतां अनुस्मर्यताम् ।

सुमतिः-* आणावेदु अय्यउत्तो ।

विवेकः-

प्रवृद्धमतिकश्मलप्रलयपावकप्रक्रियां
विमुच्य भगवत्कृपां वृजिनसिन्धुकुक्षिंभरीं ।
कदध्वपरिवर्त्तिभिर्यदिह कर्म निर्मीयते
तदस्तु लवणाकरे लवणसेतुराधित्सितः ॥ ३० ॥

यः पुनरनन्यभावेन भगवदनुकम्पामालम्बते तस्य तु तादृशीं सिद्धिमवधारय ।

विविक्तनिखिलस्थितिर्विषयवृत्ति निर्वेदवान्
विरक्तिपरिरम्भणग्लपितसर्वदुर्वासनः ।
निवृत्तिपथजांघिको निभृतचित्तवृत्तिः परं
प्रपद्य मुरभित्पदं भवमतीत्य संसिध्यति ॥ ३१ ॥

* आज्ञापयत्वार्यपुत्रः ।

प्रवृद्धेति—॥ प्रवृद्धं अधिकं यन्मतिकश्मलं मतिकालुष्यं तस्य प्रलयपावकस्य कालानलस्य प्रक्रियां प्रकारं तत्वाश्यकरीमित्यर्थः वृजिनानि पापानि एव सिन्धुस्समुद्रः तेन कुक्षिंभरीं उदरभरणां कुर्वाणां पापापहन्त्रीमितियावत् भगवत्कृपां विमुच्य कदध्वसु दुर्मार्गेषु स्वर्गादि साधनेषु प्रवृत्तिभिर्यत्कर्म निर्मीयते तत् लवणाकरे आधित्सितः आधातुमिष्टः लवणसेतुः लवणैः कृतस्सेतुरस्तु समुद्रे चिकीर्षितलवणसेतुरिव स्वयं नश्यतीति भावः ॥ ३० ॥

एवं भगवत्कृपावैधुर्य्ये प्रणिधानाभावं प्रतिपाद्य तदालम्बने भगवत्प्राप्ति पर्य्यन्ता सिद्धिर्भविष्यतीत्याह यः पुनरिति—॥

अनन्यपरात्मनोऽन्यो न विद्यते यस्मिन् सोऽनन्यः

तेन भावेन तत्तादृशीं इत्यत्र तच्छब्द स्वरूपपरः तादृक्शब्दः स्वभावपरः तां तादृशीं च सिद्धिमवधारय विविक्तदेश सेवित्वादिभिः समाधिसिद्धिः फलसिद्धिश्च भविष्यतीत्याह—

विविक्तेति—॥ विविक्ते एकान्ते निखिलास्थितिः स्थितिशब्दः गमन शयनादीनामप्युपलक्षकः अनेन विविक्तदेशसेवित्वं सूच्यते विषयेषु शब्दादिषु यावृत्तिः वर्त्तनं तदनुभवः तस्यां निर्वेदवान् विरक्तेः वैराग्यस्य परिरंभणेन संश्लेषेण ग्लपिता शान्ता सर्वा दुर्वासना यस्य सतथा निवृत्ति पथे निवृत्तिधर्मे जांघिकः जङ्घालः सदैकसंचारी

सुमतिः—*जुत्तं एदं तहवि पच्चक्खिअपरमत्थं तुमं एव्वपरिपुच्छं-मणिम्मलगुरुसआसणिध्धारिअणिअमंतहिअआणं णिट्ठाविअणिहिल-पडिपक्खाणं णिस्सेसपसमिअणिज्जरघरवासरसवासणाणं अणाल क्खिअदोसगन्धमङ्गलैकताण महुमहणचलणसेवामहाणंदलाहलंपडाणं अप्पमाअपरिगहिअ णिउत्ति धम्माणं असम्भाविअपच्चूहाणं वि महा-पुरुसाणं केण उण विणिवाएण मोखोव्वाओ सिग्घंण संपज्जइ।

विवेकः—प्रिये इदमर्पिते महामतिभिरवधारणीयमतिगहनमभि-दधामि यत्तत्सनकसनन्दनसनत्कुमारनारदशाण्डिल्यप्रभृतयः परमैकां-तिनः प्रतिपादयन्तिआकर्ण्यताम् एतदवहितया भवत्या—

**तिमिङ्गिल तिमिङ्गिलो गिलतितद्गिलस्तन्तथा**
**तमप्यथ च तद्गिलस्तदिहपश्यकर्मक्रमे।**

*युक्तमेतत् तथापि प्रत्यक्षित परमार्थं त्वामेव परिपृच्छामिनिर्मलगुरुसकाशनि-र्धारितनिगमान्तहृदयानां निष्ठापितनिखिलप्रतिपक्षाणां निश्शेषप्रशमितनिर्भरगृह-वासरसवासनानामनालक्षितदोषगन्धमङ्गलैकतानमधुमथनचरणसेवामहानन्दलाभलं-पटानां अप्रमादपरिगृहीत निवृत्तिधर्माणां असम्भावित प्रत्यूहानामपिमहापुरुषाणां केन पुनर्विनिपातेन मोक्षोपायः शीघ्रं न सम्पद्यते।

निभृता निश्चला चित्तवृत्तिः मनोव्यापारो यस्यसतथा परं सर्वोत्तरं मुरभित्पदं भगव-त्स्थानं प्रपद्य भयमतोत्य न बिभेति कुतश्चनेति श्रुतेः संसिध्यति संसिद्धो भवति सिद्धभगवत्साम्यः भविष्यतीत्यर्थः ॥ ३१ ॥

निष्ठापिताः प्रणाशिताः निखिलाः प्रतिपक्षा। यैस्तेषां निश्शेषं यथाभवति तथा प्रशमिता निर्जरगृहे स्वर्गे वासरसेवासना येषां ते तथा अनालक्षितः दोषगन्धो ययोस्तौ तथा मंगलानामेकतानो मधुमथन चरणौ तयोस्सेवायां यो महानन्दरसः तस्य लंपटानामुत्सुकानामप्रमादेनावधानेन परिगृहीतो निवृत्तिधर्मो यैस्तेषां विनिपातेन विघातेन मोक्षोपायभक्तिः प्रपत्तिर्वा शीघ्रं न संपद्यते फलप्रदो न भवति।

अतिगहनमति रहस्यं। प्रभृति शब्देन शुक शौनकादयो गृह्यन्ते।

तिमिमिति—॥ तिमिङ्गिलः शतयोजनायतमत्स्यग्रसनसमर्थोमत्स्यः तिमिं शत-योजनायतं मत्स्यं गिलति ग्रसति किल तथा तद्गिलस्तत्भक्षकः तं गिलति तद्गिलः ति.

समस्तवृजिनोदधिग्रसनडम्बकुंभोद्भवे
निवृत्तिमपि धर्ममत्त्यनघतत्वविन्निग्रहः ॥ ३२ ॥

अन्यदप्येतादृशमवधारयेथाः ।

प्रथितंपातकिवर्गकृतघ्नएकोहिकृत्स्नमतिशेते ।
तमिमंक्रियमाणघ्नस्तमपिदुरात्माकरिष्यमाणघ्नः ॥ ३३ ॥

सुमतिः—(विचिन्त्य,) * इदंणाम णिस्समब्भहिअमाहप्पस्स पडि-बुद्धअणणिग्गहस्स पहावो दंसिओ अस्स उण णाह किं णास्थि परिहारो ।

विवेकः—अस्तितु कश्चिदेकः यदिहपुनस्तत्प्रसादनं ।

तथा हि ।

तोयोज्झनेन परितापमुपेत्यजन्तु
स्तोयेनजीवतिपुनः क्रमयोजितेन ।

* इतिनाम निस्समाभ्यधिकमाहात्म्यस्य प्रतिबुद्धजननिग्रहस्य प्रभावो दर्शित अस्य पुनर्नाथ किंचास्ति परिहारः ।

मिङ्गिलगिलगिलः तं तिमिङ्गिलगिलं गिलति इह लोके कर्मक्रमे कर्मपरंपरायां तत्ति मिगिरणादिकं पश्य एवमनघस्य तत्वविदः ब्रह्मविदइत्यर्थः निग्रहः कोपः तद्विषय पचारजन्मा तद्दोषः समस्तानि च तानि वृजिनानि च तान्येवोदधिः तस्यग्रसने हिंभकुंभोद्भवं बालागस्त्यं समस्तपापहरमपि निवृत्तिधर्मम् अत्ति नाशयति ब्रह्मविद पचारेण प्रतिबद्धफला विद्या भवतीति भावः ॥ ३२ ॥

उक्तं निवृत्तिधर्मादपि ब्रह्मविदपचारस्य प्राबल्यं दृष्टान्तेन दृढयितुमाह अन्यदपीत्यादिना— ॥

दृष्टान्तान्दर्शयति—

प्रथितमिति— ॥ अत्र यथा पातकिवर्गात्कृतघ्नस्य कृतघ्नात् क्रियमाणघ्नस्य तस्मात्करिष्यमाणघ्नस्य प्राबल्यं तथा सकलपातक निवर्तकादपि निवृत्तिधर्मात् ब्रह्म-विदपचारस्य प्राबल्यमिति भावः ॥ ३३ ॥

इति नाम निस्समाभ्यधिकमाहात्म्यस्य प्रतिबुद्धजन निग्रहस्य प्रभावोदर्शितः तत्प्रसादनं तस्य ब्रह्मविदप्रसादनं ।

तत्प्रसादनत्वपरिहारत्वं दृष्टान्तेन उपपादयति—।

तोयोह्यनेनेति— ॥ जन्तुः मत्स्यः तोयोज्झनेन तोयस्य उज्झनेन त्यागेन

तद्वन्महत्त्यजनतस्तमसिप्रविष्ट
स्तत्संश्रयेण भजतेपरमार्थदृष्टिम् ॥ ३४ ॥

अपि च।

बहुजन्मसुकृतसिद्धं ब्रह्मविदपचारदूरगंपुरुषं ।
अभिसरतिनित्यरक्ता सत्वरमपवर्गसाधिनीविद्या॥३५॥

सा च।

परभक्तिरप्रकम्प्यानिवृत्तिधर्मानुबन्धिगुणबन्धैः ।
भवजलधि पोतपात्री जातावृद्धिं दिनेदिनेभजते ॥३६॥

सुमतिः-(सविमर्शं) *जुत्तं एदं जद दुण्णिवारणिअदबलणिम्मि-
आअपक्कणिस्सेसकसाअस्स मोक्खपक्खणिक्खे व जोग्गा अणिममहिम-

* युक्तमेतत् यदि दुर्निवारनियति बल निर्मिता अपक्वनिःशेषकषायस्य मोक्ष-

परितापमुपेत्य क्रमेण योजितेन तोयेन पुनर्जीवति तद्वत्महत्यजनतः तमसि अज्ञाने प्रविष्टः जनः तत्संश्रयेण तस्य ब्रह्मविदः संश्रयणेन परमार्थदृष्टिं यथार्थज्ञानं भजते यथा मत्स्यः तोयत्यागेन तप्तः पुनरपि जलेनैव जीवति एवं तत्वविदो नियहात् अज्ञानमासाद्य मोमुह्यमानो जनः तत्प्रसादेनैव प्रतिबुद्धोभवतीति भावः ॥ ३४ ॥

तस्य समाधिसिद्धिश्चभवतीत्याह अपिचेति—।

बह्विति—॥ बहुषु जन्मसु कृतैस्सुकृतैस्सिद्धं निर्मलचित्तब्रह्मविद्विषयापचारस्य दूरगं दूरेवर्तमानं अपवर्गसाधिनीविद्या नित्यरक्ता नित्यमनुरक्तासती सत्वरमभिसरति यत्र।

जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णेभक्तिः प्रजायते ॥

इत्यादिक्रमनुसन्धेयं ॥ ३५ ॥

निश्चयायाविद्याया दिने दिने वृद्धिश्चभवती त्याह साचेति—॥

परभक्तिरिति—॥निवृत्तिधर्मानुबन्धिनः ये गुणाश्शमदमादयः रज्जवश्च त-त्कृतबन्धैः अप्रकम्प्या तयेव भवजलधेः संसारसागरस्य पोतपात्री पोतरूपपात्री सा ताहशविद्या परभक्तिरूपा सती दिने दिने वृद्धिं भजते ॥ ३६ ॥

गरिमलहिमवसित्वशित्वसित्वप्राप्तिपाकाम्यप्रमुखापरमपुरुषसत्त्वसिद्धिसाधनाः अन्तरायाणि भोन्ति ।

विवेकः—सत्यं देवि दुर्जयाएतेदुरन्तवैरिणो योगान्तरायाः त देषां संभवे परिहरणादपि सम्भवस्यैव परिहरणेन निष्प्रत्यूहा भवति नैश्रेयसीसिद्धिः—

ततः प्रविशति भूर्जपत्रभूषितोत्तमांगो दूतः—

दूतः—साञ्जलिबन्धं—

राजन् अयमहमस्मिदेवस्यमहाराजस्यमहामोहस्य दृष्टिपथमनुभ्रान् सर्वत्राप्रतिहतगतिः संवृतिसत्योनाम दूतः तदभिवादये सावरोधं भवन्तं ।

विवेकः—( स्वगतं ) किंनिमित्तमयमुपागतः ।

(प्रकाशं) अस्थानवृत्तिमपहायापरिमितायुर्भूयाः

दूतः—उत्तमाङ्गादवतारितं दरविकसिताञ्जलिकोशनिहितं भूर्जपत्रमुपदर्शयन्, इदंकिल महाराजचतुर्दशभुवनचक्रचक्रवर्त्तिनो द्वापर मन्त्रिनिर्द्धारितं निखिलकार्यस्यदुर्मतिमतप्रतिष्ठितस्य देवस्य महामो

---

पक्षनिक्षेपयोग्या अणिममहिमगरिमलघिमवशित्वेशित्वप्राप्तिप्राकाम्यप्रमुखाः परमपुरुषार्थसिद्धिसाधनयोगान्तराया न भवन्ति ।

---

अपक्वाः अदग्धाः निश्शेषाः कषायाः मनोमलानि यस्य तस्य पुरुषस्येति शेषः । मोक्षपक्षेविक्षेपस्य योग्याः परमपुरुषार्थस्य भगवत्प्राप्तिरूपस्य सिद्धेः साधनभूतस्य योगस्यान्तराया न भवन्ति ।

यदि एतेषां संभवेसति परिहरणादपि संभवस्यैव ।

परिहरणेन यथा संभवो नस्यात्तथा प्रयतनेन ॥

संवृतिसत्यः अपरमार्थसत्यः असत्येषु वस्तुषु सत्यत्व बुद्धेरभिमानिदेवताविशेषः । एष एव योगाचारेण संवृतिसत्य इति व्यवह्रियते । प्रच्छन्नबौद्धास्तुव्यावहारिक सत्य इति वदन्ति । सावरोधं सस्त्रीकं ।

अस्थानेष्वपरमार्थवृत्तिषु वृत्तिं वर्त्तनमपहाय दरविकसिते अञ्जलिकोशे पद्मकोशाकारे अञ्जलौ महितं चतुर्दशभुवनानां । चक्रवर्त्तिनः सार्वभौमस्य । द्वापरयुगाभिमानी सएव मन्त्री सहि कलेरासन्नत्वात् महामोहस्य मन्त्री तेन निर्धारितं निश्चितं अखिलं कार्यं यस्य तस्य ।

हस्य लोभनाम्नागणिकेन लिखित्वात्वदर्थं प्रेषितमन्तरङ्गेणमया उपहूतमलंघनीयंशासनं ।

विवेकः-सानादरावहित्थं, भद्रा अस्माकमप्यभिमतः खल्वसितदिह उपहूरे त्वमेववाचय ।

दूतः--यदादिशति महाराज इति विनयनिभृतं वाचयति ।

**एतत्कामादिमान्यस्य महामोहस्यशासनं ।**
**संसारह्रासभीतानां स्वर्गिणामपिसंमतं ॥ ३७ ॥**

विवेकः-(अपवार्य) (सान्तर्हासं) देवि किं वयमपि शासनीयाद्दुरात्मनो महामोहस्य परचित्तवेदनार्थमिहवाचिकन्तावच्छ्रोतव्यं भद्र ततस्ततः-

**दूतः-परोपास्तिश्रद्धावधिकमतिवृत्तंयदिहते ।**
**तदैश्वर्यप्राप्त्यै भवतु बहुमन्येमहितदा ॥**

विवेकः-(अवज्ञां नाटयन्) प्रिये आकर्णितः किलायं भिक्षुपादप्रसरण न्यायः अथवा स्वाभाव्यमेव शवमुष्टिवद्गृहीतयाहिता महामोहस्य ।

सुमतिः-* एव्वं एदं ।

---

* एवमेतत् ।

---

दुर्मतिमते प्रतिष्ठितस्यानादरावहित्थाभ्यां सहितं यथा भवति तथा तस्याभिमतत्वं सत्यत्वेन । उपहूरे एकान्ते ।

एतदिति—एतत्कामादि मान्यस्य आदि शब्देन क्रोधलोभादयो गृह्यन्ते संसारस्य ह्रासात् भयात् भीतानामैहिकभोग प्रवणानां स्वर्गिणामपि ॥ ३७ ॥

परेषां मोहादीनां चित्तवेदनार्थमभिप्राय ज्ञापनार्थं ।

परेति—परस्य ब्रह्मण उपारुये उपासने याश्रद्धा आदरः सा अवधिः काष्ठा यस्य ततथा ते यदतिवृत्तं अतिलंघ्य वर्त्तनं अनुचिताचरण मिति यावत् तत् ऐश्वर्यं प्राप्तै भवतु । परोपास्त्यैः ऐश्वर्यं प्राप्तये च भवति ।

विवेकः—ततः ।

दूतः—अतिक्रान्तावस्मद्भ्रुकुटिनटनारम्भसमय ।

प्रदीप्तक्रोधादिप्रतिभटनिरुद्धोनभवसि ॥ ३८ ॥

विवेकः—प्रिये स्वधर्मनिरतानस्मान् प्रति सोयमाशीर्वादः अयि मोहदूत किमस्तिशेषंवाचकस्य ।

दूतः—अस्ति किञ्चिदात्मीयबलाध्यक्षकामक्रोधवैभवविषयम् ।

विवेकः—अस्तु को दोषः शृणुमस्तावत् ।

दूतः—विश्वाधिकोविलयमेष्यतिकस्यभूम्ना

वीरः प्रसिद्धमहिमा विबुधेषुकामः ।

क्रोधोदितं यदनुभाववशेनशम्भोः

शृङ्गारशीतलमभून्नयनं तृतीयम् ॥ ३९ ॥

---

चतुर्विधाभजन्तेमां जनास्सुकृतिनोऽर्जुन ।

आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥

इत्यत्र तथा दर्शनात् । सदा बहुमन्येमहि ॥ ३८ ॥

अयं भिक्षुपादप्रसरण न्यायः आकर्णितः । अनुपहतः भिक्षुर्हि कुटुंबिनां गृहेषु पादमेकं किंचित्प्रसार्यतैः कवाटेन द्वारपिधाने क्रियमाणे पार्श्वे निष्पीडत इत्याक्रुश्य पुनः कवाटे अपहृते अन्यमपि चरणं तत्रनिधायान्तः प्रविष्ट इति तद्वदत्रापि किंचिदवकाशेदत्ते सर्वाक्रमणसंरंभः । पक्षान्तरं अथवेति स्वाभाव्य स्वाभाव्य एवशवमुष्टेः शवस्य मुष्टिरिव गृहीतग्राहिता गृहीतस्य वस्तुनो ग्राहकत्वमेतत् ।

अतिक्रान्तेति—अतिक्रान्तो मत्कासनातिलंघने सत्यां अस्माकं भृकुट्या नटनारंभ समये प्रदीप्ताः तेजिष्टाः ये क्रोधादयः तएव प्रतिभटाः तैर्निरुद्धस्त्वभवसि नश्यसि ॥ ३८ ॥

एतमेवार्थमन्यथा योजयन्ति स्वधर्मेति स्वधर्मः पुरुषमेधरूपः तस्मिन्निरतानस्मान् प्रत्याशीर्वादः निरुद्धो न भवसि जीवितो न भवसीति ।

आत्मीयस्य बलस्याध्यक्षा ये क्रोधादयः ते विषयाः यस्य तद्विषयं ।

विश्वेति—विश्वस्मात् जगतो अधिका विबुधेषु देवेषु प्रसिद्धमहिमोकामः कस्यभूम्ना महिम्ना विलयमेष्यति न कस्यापीत्यर्थः शंभोः क्रोधोदितं क्रोधेन विकसितं तृतीयं नयनं यदनुभाववशेन यद्वैभववशेन शृंगारेण शृंगाररसेन शीतलं सुभगं अर्धनारीश्वरस्य ललाटनेत्रे अर्धस्य गौरीनेत्रतया तृतीय नयनस्य शृंगारशीतल त्वं ॥ ३९ ॥

अपि च ।

कामोसौसमवर्तताग्र इतिहि ब्रूते समीचीश्रुतिः
कामादेवजगज्जनिस्थितिलयैराद्यः पुमान्क्रीडति ।
निष्कामोपि सकाम एवलभते निश्रेयसंदुर्लभं
कामः कस्य वशेकएषभुवने कामस्यनस्याद्वशे ॥ ४० ॥

सुमतिः—*महाराज किं तुह्मेहिं विदुज्जयो मअरलञ्छणो ।

विवेकः—देवि मिथ्यादृष्टिप्रियस्यमोहस्य प्रलपिते किं प्रत्युच्यते अवशिष्टमपि निशामयामः—

दूतः—यदि कुप्यतिकोपाय न कोपमतिवर्त्तते ।
अकोपविषयं कोपं कथं कश्चिद्विजेष्यते ॥ ४१ ॥

तदिदमुभयतः पाशारज्जुः ।

सुमतिः—†णाह णं कामादो विकोवो दुज्जयो जेणकामजअम्मि विसअं कालणं होइ ।

* महाराज किं युष्माभिरपि दुर्जयोमकरलाञ्छनः ।

† नाथ ननु कामतोपि कोपो दुर्जयो येन कामजयेपि स्वयं कारणं भवति ।

पुनरपि कामवैभवमाह अपिचेति—

कामइति—असौ कामः अग्रे समवर्ततेति समीचो समीचीन श्रुतिर्ब्रूते हीति प्रसिद्धौ । अत्र कामस्तदये सत्प्रवर्तनाधीति श्रुतिरभिप्रेत आद्यः सर्वकारणभूतः पुमान् नारायणः कामादिच्छयैव जगज्जनिस्थितिलयैः क्रीडति । अत्र सोकामयत बहुस्यां प्रजायायेति इत्यादि का श्रुतयोनुसंधेयाः निष्कामोपि पुरुषः दुर्लभं निश्रेयसंतस्मिन् सकाम एव लभते मोक्षेच्छाया अभावे तत्प्राप्त्यसंभवात् एवं भूतः कामः कस्यवशे न कस्यापि भुवने कामस्यवशे यो नस्यादेवकः न कोपीत्यर्थः ॥ ४० ॥

मिथ्यादृष्टेः मिथ्याज्ञानस्य प्रिय इष्टः तस्य प्रत्युच्यते प्रत्युत्तरं दीयते ।

यदिति—॥ कोपाय कुप्यति यदि सकोपं नातिवर्तते अकोपः कोपाभावः विषयो यस्य तं कोपं ममकोपोमाभूदित्यकोपं इत्यर्थः कश्चित् कथं विजेष्यते न कश्चित्केनापि प्रकारेण विजेष्यत इत्यर्थः ॥ ४१ ॥

विवेकः—प्रिये स्थानक्रोधो न खलु दोषाय योऽसौ कामादिनिरसनार्थतया परमार्थवेदिभिः प्रशंस्यते (दूतमवलोक्य) दूतश्रुतमिह-श्रोतव्यं ब्रूहिमद्वचनाद्युष्मत्स्वामिनं ।

अप्राणितमहामोहमनङ्गीकृतमन्मथं ।
विधूतप्रतिघंलोको विवेकं बहुमंस्यते ॥ ४२ ॥

दूतः—साधयाम्यहमिति द्वित्रिपदमतिक्रम्य स्वगतं ।

सुप्तप्रबोधनसमुत्सुकया सुमत्या
पत्न्या सहाचरित विश्वहितं विवेकं ।
जेतुं कएव जगति प्रभवेत्तथापि
स्वामीनियोजयतिमोह इति स्वयत्नः ॥ ४३ ॥

(प्रकाशं) महाराज 'त्यजेदेकं कुलस्यार्थे' इति ।
नीतिंनातिवर्तयाः इति निष्क्रान्तः ।

सुमतिः—* अय्यउत्त जइ मुत्तिसाहणसज्जो पुरुसो मोहपउत्तेहिं

---

*आर्यपुत्र यदि मुक्तिसाधनसज्जः पुरुषो मोहप्रयुक्तैः कामक्रोधलोभ मदमत्सरप्रभृतिभिरभिभूयते एतावान् तवपरिश्रमोविफलो भविष्यति ।

---

उभयतः पार्श्वद्वयेपि पाशः बन्धनरज्जूः कोपोमाभूदिति कोपजयेपि कोपवशत्वं तदभावेपि तद्वशत्वं स्यादेवेति भावः ।

स्थाने कामादिजये तदेव विशदयति यासाविति ॥

अप्राणतेति—॥ अप्राणितः प्राणविहीनः संहृतइत्यर्थः महामोहो येन सं अनंगीकृतः मन्मथः येन तं विधूतः निरस्तो प्रतिघः क्रोधो येन तं विवेकं लोको बहुमंस्यते । महामोहादिप्रतिपक्षध्वंसिनं मां लोको बहुमन्यते तदेववरं नतुबहुमन्येमहि तदेति स्वत्कृतं बहुमानमिति भावः ॥ ४२ ॥

सुप्तेति—॥ सुप्तस्य प्रकृतिसंसर्गवशात् संकुचितज्ञानस्य प्रबोधनसमुत्सुकया भार्यै स्वपत्न्या सहाचरित मनुष्ठितं विश्वस्यहितं येन तं विवेकं जेतुं जगति क एव प्रभवेत् कोपिनप्रभवेदेव । एवं सति 'तुष्णीं स्यातव्यमित्यत आह—स्वामीति—। नः अस्मान् ॥ ४३ ॥

त्यजेदेकमित्यादेः अयं आशयः । पुरुषस्य एकस्य मोक्षणे कुलद्वयं नश्यति तस्मिन् नष्टे कुलद्वयं जीवति अतः कुलद्वयजीवनाय एकं पुरुषं त्यजेदिति ।

कामक्कोहलोहमअमच्चरप्पहुदीहिं अहिहूअइ एआवंदोतुम्ह परिस्समो विअलोहोदु—

विवेकः- देवि मैवं मन्वीथाः आशंसेथाः पुनश्शोभनमेव ।

त्रय्यन्तैरवधारिते भगवतिक्षिप्तेविरोधभ्रमे
सांगोपाय विभागसंभृतमतिः संप्रत्यसौ साधकः ।
कामक्रोधनिशातकण्टकमिलत्कालुष्यपङ्कच्छटा
निर्मुक्तेन सुशीतलेनच पथानिश्श्रेयसंप्राप्स्यति ॥४४॥

( नेपथ्ये ) दिव्यवैतालिकौ विजयतां देवः—

प्रथमः—

रम्या यामवती पदार्पणपटी रागाब्धिवेलोद्गति
श्वेतोजन्मकदम्बधूलिविततिश्शृङ्गार चूडाजपा ।

शोभनाशंसनप्रकारमाह त्रय्यन्तैरिति ॥

त्रय्यन्तैरिति ॥ भगवति नारायणे त्रय्यन्तैः वेदान्तैः अवधारिते सर्वकारण तया निश्चिते सति अनेनकारणाध्याया उक्तः । विरोधभ्रमेप्रधानपरमाणवादि कारण त्ववादिनीभिः कपिलादिस्मृतिभिः ब्रह्मैककारणत्ववादिवेदान्तानां विरोधस्स्यादिति यो विरोधभ्रमः तस्मिन् क्षिप्तेसति विरोधज्ञानस्य भ्रमत्वं कपिलादि स्मृतीनां पुरुष-प्रणीतानां दोष संभावनया पौरुषेय त्वे वे न्तानां नित्यनिर्दोषतया च अनेनाविरो-धाध्यायार्थसूचितः । असौ साधकः पुरुष) सांगानां साधन सप्तक सहितानामुपायानां विद्यानां विभागे भेदे संभृतमतिः परिपूर्णमतिस्सन् अनेन साधनाध्यायार्थं स्संगृहीतः। कामक्रोधावेव निशातकण्टकौ ताभ्यां मिलत्यत्कालुष्यं मतिभ्रमः तदेव पंकच्छटा ताभ्यां निर्मुक्तेन परित्यक्तेन शीतलेन च पथा अर्चिरादिमार्गेण निश्श्रेयसं अपवर्गं प्राप्स्यति। अनेन फलाध्यायार्थस्संक्षिपः ॥ ४४ ॥

एवं मुक्त्युपायायारंभमुक्त्वाप्रतिपन्नस्य सौम्रिकसंनाह्य समय सूचनं निशामुखवर्णन व्याजेन वैतालिकाभ्यां विशदयति नेपथ्ये इत्यादिना ॥

देवो विजयतामिति वैतालिकौ वन्दिनावाहतुरिति शेषः । अथ तयोः कश्चि-द्वदति । स एव प्रथमः ।

रम्येति-॥ रम्या मानोज्ञा यामवत्याः रात्रेः पदार्पणपटी चरण न्यासोचिता

संमोहद्विपशोणबिन्दुपटलीसंध्याजरीजृम्भते
प्रत्यग्दिग्वनितापयोधरतटीकाश्मीरपङ्कद्युतिः ४५॥

द्वितीयः—

दिनाधिपविनाकृतिव्यसनखिन्नसंध्यावधू
विधूतकबरीभरप्रसरकौतुकापादकम् ।
विशृङ्खलकलिन्दजाजलतरङ्गभङ्गावली
मलीमसमिदन्तमोजगदशेषमाचूषति ॥ ४६ ॥

विवेकः—(कर्णे दत्वा) देवि दिवाभीतप्रायस्य स्मत्प्रतिपक्षस्य सौप्तिक सन्नाह समयं सूचयतः प्रायेणास्वतो वियातवादिनौ वैतालिकौ संपश्यतां भवती

प्रकाशस्सङ्कोचं भजतिजगतस्सीदतिरवौ
तमिस्राविष्फूर्तिस्स्थगयतिमुखं शक्रहरितः ।

---

कौसुम्भपटीराग एव अब्धिः तस्या वेलाया लहर्या उद्गतिः उद्गमनमनुरागस्य रक्तवर्ण कविसमय सिद्धं चेतो जन्मनः कामस्यकदंबधूलीनां कदंबपुष्परजसां विततिः मन्मथेन वकीर्यमाणा कदम्बधूलिर्विततिरित्यर्थः शृंगारस्य शृंगाररसस्य चूडाजपाकुसुम जात संमोह एव द्विपः तस्य शोणबिन्दूनां सिन्दूरबिन्दूनां पटलीपंक्तिः प्रत्यग्दिगेव वनिता तस्याः पयोधर तट्योः यत् काश्मीरं कुंकुमं तस्य द्युतिः प्रभा सन्ध्या सन्ध्यारागः जरीजृम्भते ॥ ४५ ॥

दिनेति—॥ दिनाधिपस्य सूर्यस्य विनाकृतेः वियोगात् व्यसनं क्लेशः तेन खिन्नायाः सन्ध्याया एव वध्वाः विधूतस्य बद्धान्मुक्तस्य कबरीभरस्य केशपक्षस्य प्रसटः यष्फूर्त्तिरिति यत् कौतुकं तस्यापादकं निष्पादकं विशृङ्खलस्य निर्निरोधस्य कलिन्दजा जलस्य यमुना जलस्य तरंग भंगानां वीचीभेदानां आवलीव मलीमसं नीलं इदं दृश्यमानं तमः अशेषं जगत् आचूषति आवृणोतीत्यर्थः ॥ ४६ ॥

दिवाभीताः उलूकाः तत्प्रायस्य ततुल्यस्य सौप्तिकं सुप्तिसमयसंहारः तस्मिन् संनाहस्य समुचितं सर्वं सूचयतः स्वतः स्वभावादेववियातवादिनौ धृष्टतयावदचौ ॥

प्रकाशेति—॥ रवौसीदति अस्तंयतेसति जगतः प्रकाशः संकोचं भजति त मिस्रायाः अन्धकारस्य विस्फूर्त्तिः शक्रहरितः प्राच्याः स्थगयति विधत्ते विश्वमवस्कन्द-

अवस्कन्दन्विश्वंसुमुखिमधुनासाकमधुना
विधत्तेदुर्दान्तोविविधमपनोतं रतिपतिः ॥ ४७ ॥

अपि च ।

अश्रान्तसन्ततिभिराभरण प्रकाशै
राम्रेडयन्त्यइव मङ्गलदीपभासः ।
अन्तःपुरंतिलकयन्तिसमंसमन्ता
दारात्रिकं मृगदृशोनियमंविधातुं ॥ ४८ ॥

सदहमिहसान्ध्यम् नियममनुपाल्य परब्रह्मप्रवणमानसं पुरुषमभिरक्षामि, भवत्यपि क्षान्तिशान्त्यादि परिजनसेविता मङ्गलाचरण सौधमधिरुह्य मत्प्रत्यागमन प्रतीक्षावर्तिनी ।

इति सुमत्या सहनिष्क्रान्तः—

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
संकल्पसूर्योदये भक्त्युपायारम्भोनामतृतीयोंकः ॥
श्रीमते भगवते भाष्यकाराय महादेशिकायनमः ।
श्रीमते निगमान्त महादेशिकायनमः ॥

---

न्पीडयन् रतिपतिरधुनामधुनासाकं विविधमपनीतमन्याय्यं विधत्ते अकृत्य करणादिकं कारयति ॥ ४७ ॥

अश्रान्तेति-॥ अश्रान्ता अविरता सन्ततिः परंपरा यासां ताभिः आभरणप्रभाभिः मंगल दीपानां मंगलार्थमारोपितानां दीपानां भासः किरणाः आम्रेडयन्त्य इव वर्धन्त्य इव स्थिताः आरात्रिं नीराजनरूपं नियमं विधातुं मृगदृशः समं युगपदन्तःपुरं समन्तात्तिलकयन्ति अलंकुर्वन्ति सायन्तन समये द्वीपा नारोप्य तत्तद्देवतानीराजनविधानाय संचरन्त्यस्स्त्रियः अन्तःपुरस्य अलंकारभूताभवन्तीतिभावः ॥ ४८ ॥

अनुपाल्य अनुष्टायेत्यर्थः । मंगलाचरणसमुचितं सौधमधिरुह्यमत्प्रत्यागमने प्रतीक्षादृष्टिर्यस्यास्सा तथोक्ता ।

॥ इति प्रभावल्यां तृतीयोऽङ्कः ॥

ॐ श्रीरस्तु ।

श्रीमते हयग्रीवाय नमः ।

श्रीमते निगमान्तमहागुरवे नमः ।

# सङ्कल्पसूर्योदये चतुर्थोऽङ्कः ।

ततः प्रविशति कामो वसन्तश्च

कामः—सखे वसन्त

इक्षुः पेशलमीदृशं मम धनुः पुष्पाण्यमी सायका
स्तंत्रीमंजुलनिस्वना मधुकरश्रेणी शुभा शिंजिनी ।
भीरुस्सन्नबलाजनो मम बलं तथ्यं परं कथ्यते
सोहं निर्जितशूलभृत्प्रभृतिकस्संकल्पसिद्धोदयः ॥ १ ॥

---

अथेदानीं अङ्कास्येन अर्थोपक्षेपकेन अङ्कमवतारयति तत इत्यादि-।

अङ्कान्तपात्रै रङ्कास्यं छिन्नाङ्कार्थस्य सूचनं

इत्यङ्कास्य लक्षणं अत्र पूर्वाङ्कान्ते ।

अवस्कन्दन् विश्वं सुमुखिमधुना साकमधुना ।
विधत्ते दुर्दान्तो विविधमपनीतं रतिपतिः ॥

इत्युक्ताभ्यां मदनवसन्ताभ्यां तत्रास्मत्प्रतिपक्षस्य सौप्तिकसवाहसमयं सूचयत इति । विवेकेनोक्तस्य सौप्तिकस्य सूचनात्कामस्तावत्स्ववैभवमाह ।

इक्षुरिति-पेशलं सुन्दरं तन्त्र्या इव मञ्जुलः मनोज्ञः निस्वनो यस्यास्तथोक्ता शिञ्जिनी ज्या उक्तं सर्वं तथ्यं कथ्यते निर्जिता शूलभृत् प्रभृतयो येन स तथा सङ्कल्पमात्रादेव सिद्ध उदयोऽभ्युदयो यस्य स तथा ॥ १ ॥

अपि च,

त्वयि संभृतशस्त्रास्त्रे सहाये मम संस्थिते ।
महता पञ्चमोहेन विश्वमेकातपत्त्रितं ॥ २ ॥

वसन्तः—किमुच्यते कामः खल्वसि,

कामं कामं काममपि सिद्धिं करणैः स्वैः
कारंकारं कर्म निषिद्धं विहितं वा ।
न्यस्यन्ति त्वय्यद्भुतसीम्नि प्रतिबुद्धाः
कामोकार्षीन्मन्युरकार्षीदिति नाम ॥ ३ ॥

अपि च,

विषमनयनमुख्यैर्विक्रमक्रीडितन्ते
सुरपतिभवनानि स्वैरसञ्चारभूमिः ।
उदधिवलयितेयं क्षोणिरुद्यानसीमा
कथमिव मदन त्वं वर्ण्यसे कान्तिसिन्धुः ॥ ४ ॥

कामः—सखे, सर्वलोकविदितमात्मनोऽपि वैभवमनुचिन्त्य, यदेतत्

प्रख्यातस्त्वयि संभवः सुमनसां विश्वं त्वयानन्द्यते
मुख्यस्त्वं किल षड्विधेषु ऋतुषु ज्योतिस्त्वदेवाश्रयं ।

---

त्वयि इति—संभृतानि शस्त्रास्त्राणि येन तस्मिन् त्वयि मयि सहाये सम्यक् स्थिते सति महता मोहेन विश्वं जगदेकातपत्त्रितं एकातपत्त्रं कृतं ॥ २ ॥

वीक्ष्यमाणातिशयाभिप्रायेण कामो सखल्विति—। कोऽसावतिशय इत्यत आह—

कामंकाममिति—॥ काममपि यां काञ्चित् सिद्धिं कामंकाममभिलष्याभिलष्य स्वैः करणैरिन्द्रियैः निषिद्धं विहितं वा कर्म कारङ्कारं कृत्वा कृत्वा अद्भुतसीम्नि त्वयि कामोकार्षीन्मन्युरकार्षीदिति न्यस्यन्ति नाम प्रसिद्धो ह्येतदिति भावः ॥ ३ ॥

अन्यदप्याह अपि चेति—।

विषमेति—॥ विषमनयनमुख्यैः त्रिलोचनप्रधानैः ते तव विक्रमक्रीडितं पराक्रमलीला सुरपतीनां ब्रह्मादीनां भवनानि स्थानानि स्वैरसञ्चारस्य स्वच्छन्द सञ्चारस्य भूमिः कान्तीनां सिन्धुः अपारं निधानमत एव मदनमदहेतोस्त्वं कथमिव वर्ण्यसे तव महिमोऽपारत्वादयमेवंविध इति परिछिद्य वर्णयितुमशक्यस्त्वमिति भावः ॥ ४ ॥

प्रख्यात इति—॥ सुमनसां पुष्पाणां शोभनमनसां च सम्भवस्त्वयि प्रख्यात

यत्रश्रीर्धृतपंकजा सचपरस्त्वत्संश्रयोमाधवः
कामस्तेसचिवः कएव भविताकालोत्तमस्त्वत्समः ॥५॥

अपि च,

वसंतस्त्वं वह्निर्मलयपवनस्सारथिरसौ
वशोकादिर्ज्वालामधुकरगणो धूमपटली ।
सुधासूतिस्नेहस्तदिहजितनिर्वाणवचसो
विरक्तिस्तेदाह्यंद्रुहिणगिरिशादेरपिसतः ॥ ६ ॥

वसन्तः—महावीरमकरकेतन मादृशामतिशयस्त्वदर्थएव, यथा

ऋतवोहिमत्प्रधानास्तवैवनानास्त्रशिल्पिनस्स्रष्टृः ।
विजयसमयं शशांको विश्रमकालं व्यनक्तिदिवसेशः ॥७॥

---

विश्वं जगत् त्वयानन्द्यते तुष्यति षड्विधाः प्रकाराः येषां तेषु षड्विधेषु ऋतुषु त्वंमुख्यः ऋतूनां कुसुमाकर इतिगीतत्वात् ज्योतिः ज्योतिष्टोमः त्वदेकाश्रयं त्वमेक मुख्यः आश्रयो यस्यतत्तथा ।

वसन्तेवसन्ते ज्योतिषा यजेतेति श्रुतेः यत्रधृतानि पंकजानि ययासा श्रीर्लक्ष्मीः शोभा च परः उत्कृष्टः माधवः विष्णुः वैशाखश्च त्वत्संश्रयो यस्य स तथा अतएव कालोत्तमः त्वत्समः कएव भविता नकोपि त्वत्समो भविष्यतीतिभावः ॥ ५ ॥

तमेव अग्नित्वेन रूपयति अपिचेति ॥

वसन्तः इति—॥ हे वसन्त त्व वह्निः असौमलयपवनः सारथिः तद्देश प्रापकः अशोकः कंकेलिरादिर्यस्य स तथा आदिशब्देन आम्रादिग्रं ह्यते ज्वाला शोणिम्ना ज्वालात्वं मधुकरगणस्य धूमपटलीत्वं नीलिम्ना सुधासूतिः चन्द्र सस्नेहस्तैलादिः तस्मात्कारणादिह जगतिजितमपास्तं निर्वाणवचश्शास्त्रव्यवहारः यस्य तस्य ते द्रुहिणगिरिशादेरपि सतः सज्जनस्य विरक्तिदाह्यं वसन्तेन सतां वैराग्यमुन्मूलितं भवतीति भावः ॥ ६ ॥

मादृशानां मत्समानां । उक्तमेवार्थं विशदयति—।

ऋतव इति—॥ नानास्त्राणां विविधास्त्राणां शिल्पिनः स्रष्टारः सृष्टाविधिनेतिशेषः शशांकः विजयसमयं व्यनक्तिदिवसेशः विश्रामकालं व्यनक्ति ॥ ७ ॥

कामः—आस्तामयमन्योन्यप्रशंसनविस्तरः अवधातव्यं राजकृत्ये

वसन्तः—यदुच्यते वयस्येन, तदिह समानभावयोस्समाधिप्रवण पुरुषचेतःक्षोभणे शृंगारोद्दीपनविभावकृत्यंमय्यायत्तं भवतापुनरालम्बन विभावसंपत्तिरुपपादनीया,

कामः-सुहृत्संमतमहमिदानीमाचरामि, अयं खल्वपरिचितशुभा-श्रयधारणाभिलाषी पुरुषश्चिरपरिचितसुखालम्बने सुखेनसंमुखयितुंशक्यते अस्तिहिदेवासुरसिद्धगन्धर्वविद्याधरकिन्नरकिंपुरुषमानुषादिसर्वपुरुषचक्षुः प्रत्यक्षं स्वतः पुरुषार्थभूतंसुलोचनाभिधानं ब्रह्मनचैतदनुपपन्नं

परमानन्ददायिन्यः प्रजानांसृष्टिहेतवः ।
ब्रह्मलक्षणशालिन्योनकथं ब्रह्मयोषितः ॥ ८ ॥

वसन्तः—सखे, अत्यन्तसमतश्चत्वदभिमतोयमर्थः स्त्रियोब्रह्मेति प्रथममामनन्ति उतवापुमाननितितुवैभवादुक्तिः ।

---

अन्योन्य प्रशंसायाः विस्तारः अवधातव्यं सावधानतया स्थातव्यं ।

समाधौ प्रवणस्यपुरुषस्य चेतःक्षोभणे शृंगाररसस्योद्दीपनविभावे यत्कृत्यमस्ति मिय्यायत्तं आलंबनविभावसंपत्तिः आलंबनविभावस्य संपत्तिः समृद्धिमुपपादयितुंयोग्या अत्रविभावः कथ्यते तत्र रसोद्दीपनकारणमालंबनोद्दीपनात्मा सद्विधा परिकीर्तितः ।

आलंबन विभावश्च द्विधैव परिगीयते ।
नायिकाविषयश्चैकस्तथान्यो नायकाश्रयः
आलंबनगुणश्चैव तच्चेष्टा तदलंकृतिः ।
तटस्थाचेति विज्ञेयाश्चतुर्थोद्दीपनक्रमाः ॥

इत्यादिकमनुसन्धेयं ।

अपरिचितेएतावन्तं कालमनभ्यस्ते शुभाश्रये धारणाचित्तस्यधारणं तदभिलाषिवतशुभालंबनमित्यत्राह—अस्तिहीति—।

सुलोचनाभिधानं ब्रह्मेत्येतच्च नानुपपन्नं ॥ परमेति ॥ मोक्षपदत्व जगत्कारणत्वे किनब्रह्मलक्षणे तदुभयसंपन्ना योषितः कथं न ब्रह्म वेत्यर्थः । अयमर्थो न केवलमनुमानात्सिद्धिः ॥ ८ ॥

अपि च,

अलसललितमन्दं स्पन्दनं लोचनानां
अकृतकरमणीयावृत्तयो विभ्रमाणां ।
अपितरुणवधूनामाहरेयुर्मुनीन्द्रान्
शतमपि च विधूय ब्रह्मणां शाश्वतानाम् ॥ ९ ॥

कामः—(महर्षे) सखे वसन्त अवितथमेवैतदभिलप्यते ततश्च

अयमप्सरसांगणः प्रनृत्यन्
विशिखाधारविकल्प्यमानदृष्टिः ।
अभिगच्छतुमंक्षुमत्प्रयुक्तः
पुरुषंकांक्षितपुण्यहीनयोगम् ॥ १० ॥

वसन्तः—वयस्यपुष्पधन्वन् त्वदादेशवर्तिनीषुमत्तकाशिनीषुसिद्धं नः समीहितं अद्यहि

स्वादुगीतमधुमोहितश्रुतेः
चारुनृत्तवशवर्त्तिचक्षुषः ।

---

अपितु वेदान्तादपीत्याह त्रय्यश्चेति । त्वदभिमते एवार्थो यस्यास्तथोक्तः कोसौ त्रय्यन्त इत्यत्राह स्त्रियो ब्रह्मेति—।

स्त्रीणां ब्रह्मत्वस्य प्रथमोपात्तत्वात् अत्रैवास्यतात्पर्यमिति वदन्ति । प्रथमं मामनन्ति वेदान्ता इतिदोषः । वैभवोक्तिः अर्थवादः । अन्यदप्याह—

अलसेति—॥ अलसं क्रीडाध्वश्रमादिना सायासं ललितं प्रेमार्द्रमन्तर्विचक्षणतारं ललितमित्युक्तलक्षणं मन्दमल्पप्रचारं नयनानां स्पन्दनं चलनं अकृतकरमणीया स्वभावरमणीया विभ्रमाणां वृत्तयश्च शाश्वतानां ब्रह्मणां शतमपि विधूय मुनीन्द्रा नाहरेयुः मुनीन्द्राणामपि मनांसि स्त्रीणां विभ्रमा आहरेयुरित्यर्थः ॥ ९ ॥

अयमिति ॥ प्रनृत्यन् विशिखानां बाणानामाधारेण धारासंपातेन विकल्प्यमानादृष्टिर्यस्यास्तथा मत्प्रयुक्तः अयमप्सरसांगणः कांक्षितः इष्टः पुण्यहीनपुण्यविधुरो योगो यस्यतं पुरुषंमभिगच्छति ॥ १० ॥

त्वदादेशेवर्तन्त इति त्वदादेशवर्तिन्यः तासु मत्तकाशिनीषु स्त्रीषु समीहितसिद्धिमुपपादयति ।

भावभेदभृतकीकृतात्मनो
योगिनस्त्यजति यौवतं नधीः ॥ ११ ॥

कामः—विचिन्त्यसरोषहासं

यदिमामवमत्य संयतेत
व्यवसायान्वयदर्पितो विवेकः ।
वनिताशतवञ्चितस्य पुंसः
स्वयमाधास्यति सौभरेरवस्थाम् ॥ १२ ॥

वसन्तः—किमत्राद्भुतं विश्वविदितं हि भवतो वीरायितं

विकस्वरसुरद्रुमप्रसवशस्त्रमाध्वीमद
भ्रमद्भ्रमरसुन्दरीनिकरसंभृतज्याभृतः ।
प्रहृष्टपरभृत्प्रियापणववेणुवीणादिभिः
क्वणद्भिरुपघुष्यते कुसुमधन्वनो विक्रमः ॥ १३ ॥

स्वाद्विति—॥ स्वादु मनोज्ञं यत् गीतं गानं तदेव मधु तेन मोहिता मुग्ध श्रुतिस्त्रोत्रं यस्य तस्य चारणः सुन्दरस्य नृत्तस्य वशवर्त्ती अधीनं चक्षुर्यस्य तस्य भावभेदानां रसभेदानां भृतकीकृतात्मनः भृत्यायितचित्तस्य योगिनः धीः यौवतं युवतिसमूहं न त्यजति ॥ ११ ॥

तत्प्रातिकूल्यस्मरणात्रोषः । तद्दौर्बल्यस्मरणजनितावज्ञया हासः ॥

यदिति—॥ व्यवसायस्य अन्वयेन संपर्केण दर्पितः गर्वितः विवेकः मामवमत्य संयतेत यदि वनिताशतेन वञ्चितस्य पुंसः सौभरेरवस्थां स्त्रीसंभोगैकपरतां स्वयमेव आधास्यति संपादयिष्यति ॥ १२ ॥

विश्वविदितं विश्वप्रसिद्धं वीरायित मेव विशदयति— ।

विकस्वरेति ॥ विकस्वराणि विकसितानि सुरद्रुमप्रसवान्येव शस्त्राणि बाणास्तेषां माधव्या मधुना योमदः तेन भ्रमन्तीनां भ्रमरसुन्दरीणां मधुपाङ्गनानां निकरेण समूहेन संभृतां संपादितां ज्यां मौर्वीं बिभर्तीति ज्याभृत तस्य ते विभ्रम प्रहृष्टाः परभृत्प्रियाः कोकिलवध्वः पणवः वेणुः वंशनालः वीणादिभिः क्वणाभेदरुप घुष्यते, आदिशब्देन तालादयो गृह्यन्ते ॥ १३ ॥

तदिह लघुव्यापारलभ्ये वस्तुनि नत्वया त्वरितेन प्रयतितव्यं

माभूदमोघविशिखं नमितं धनुस्ते
मौर्वी चमाभवतु पुंखितचित्रपुंखा ।
सद्दर्शितैरपि सखेविभियाद्विवेकः
शाखानिषङ्गनिहितैश्शतशस्त्वदस्त्रैः ॥ १४ ॥

कामः—महत्प्रतिपक्षमेवं मन्दोत्साहेन च भवितव्यं दृश्यतेहि

मितप्रद्योतनिष्पाद्ये तमसामपसारणे ।
सहस्रेण करैस्साद्धं मुदेति दिवसेश्वरः ॥ १५ ॥

अपि च

तिष्ठतु संग्रामकथा द्यूते-
पुरुषस्य वादमात्रे वा ।
भवति परिभूतिलेशे कति कति-
विपदो निदर्शिताः कविभिः ॥ १६ ॥

---

लघुना व्यापारेण लभ्ये वस्तुनि प्रतिपक्ष जयरूपे त्वरितेन त्वया प्रयतितव्यं लघुव्यापारलभ्यत्वमेव दर्शयति- ।

माभूदिति ॥ अमोघाः विशिखाः बाणाः यस्य तत्तथा तेधनुर्नमितं नतं माभूत मौर्वीच पुंखिताः सम्बद्धाश्चित्राः नानावर्णाः पुंखाः शरा यस्यां सामाभुवन्तु शाखा एव निषङ्गाः तूणीराः तेषुनिहितैः शतशः असंख्यैः त्वदस्त्रैः पुष्पैरपि विवेकः बिभीयात् ॥ १४ ॥

प्रतिपक्षे महति सति एवं मन्दोत्साहेन मा भवितव्यं किंतु महोत्साहेनैव भवितव्यं लघुव्यापारलभ्येपि वस्तुनि महतां गुरुव्यापारसाहित्यं दृश्यते हीत्यर्थः । तदेवाह- ।

मितेति-॥ मितप्रद्योतेन निष्पाद्ये तमोपसारणे दिवसेश्वरः सहस्रेण करैः सार्धमुदेति ॥ १५ ॥

महोत्साहेन भवितव्यमित्यत्र हेत्वन्तरमाह- ।

तिष्ठत्विति-॥ पुरुषस्य संग्रामकथा युद्धप्रसंगः तिष्ठतु द्यूते वादमात्रे वा परिभूतेः परिभवस्य लेशेभवति सति कविभिः कतिकति विपदः नदर्शिताः अनेक विपदोनिदर्शिता इत्यर्थः ॥ १६ ॥

वसन्तः—किमित्येवमात्मप्रभावमवमत्यपरावरविश्वपरिभाविनस्ते कुतश्चित्परिभूतिलेशमाशंकसे नखलुशलभास्सहस्रमपि सहस्रकिरणमभिभवन्ति

अद्यच

विपुलसुषुमापत्तौनृत्यद्विहारतुरंगमे
मधुमदसमारम्भस्तम्बेरमस्थगितान्तरे ।
रतिरसरथोत्सेधे कश्चिद्विधित्सितसंयमः
क्वचनभवतस्कन्धावारेनजीवति जीवति ॥१७॥

नचेदानीं पुरुषस्समाधिसैाधमधिरूढः यतस्तेतस्मिन्मनोरथप्रतिहतिशंका दृश्यते हि ।

स्मरतिमहतामातङ्कानां मनस्कुरुतेग्रहान्
प्रसजति परब्रह्मप्राप्तौप्रसक्तिमपेक्षते ।

---

अवरे अपकृष्टाःपरे उत्कृष्टाः तद्रूपविश्वभाविनः उक्तमर्थं दृढयति न खल्विति—

न केवलं परिभूत्यभाव एव अपितु त्वदग्रे प्रतिपक्षो न भवतीत्याह—

विपुलेति—॥ विपुला अधिका सुषुमा कान्तिरेव पत्तिः पदातिर्यस्मिन् तस्मिन् नृत्यन्तो विहारतुरङ्गमाः विहाराः विभ्रमा एव तुरङ्गमाः यस्मिन्तस्मिन् मधुना आसवेन मदः तस्यारम्भः सएव स्तंबेरमः गजः एकवचनं जात्यभिप्रायः तेस्थगितं तरोहितमन्तरमवकाशः यस्मिन्तस्मिन् । रतौ क्रीडायां रसाः प्रीतयस्त एव रथाः तेषां उत्सेधः उच्छ्रायो यस्मिन्तस्मिन् भगवतः स्कन्धावारे सेनानिवेशे जीवति सति विधित्सितः विधातुमिष्टः संयमः प्रणिधिर्यस्य स तथा कश्चिदपि क्वचन न जीवति ॥ १७ ॥

समाधिरेव सैाधं तदिदानीं नाधिरूढश्च यतः समाधिसैाधारोहणात् तस्मिन्पुरुषे मन एव रथः तस्य प्रतिहतिशङ्का रथस्य सैाधारोहण संभवात् दृश्यते हीत्येतत्-

प्रणिधिरित्यनेन संबध्यते ।

स्मरतीति—॥ महतामातङ्कानां स्मरति कर्मणि षष्ठि गृहान्मनस्कुरुते यज्ञादिकं मनसि धत्ते परब्रह्मप्राप्तौ प्रसजति प्रसक्तोभवति प्रसक्तिं भगवत्प्रसादमपेक्षते भगवत्प्राप्तिः सत्प्रसादादृते नसेत्स्यतीति बुध्या भोगा एव उठन्वान् तस्मिनर्भिनिवि

अभिनिविशते भोगोदन्वत्यपत्रपते पुनः
प्रणिधिरधुनासिद्धापायस्सितासितपद्धतिः॥ १८

तथाहि

सोऽयमसमग्रयोगे पुरुषे सर्वाङ्गमोक्षसमयो मे ।
रथवैगुण्यविलक्षे राधेये फल्गुनस्येव ॥ १९ ॥

वसन्तः—भवतु नामैवं भगवतस्समीचीनमीहितसिद्धिः

विरक्तिकपटक्रमादूर्ध्वजिनकोटिभिर्दुर्दमे
परप्रणिधिकर्दमे पतितुमेकतानः पुमान् ।
त्वदस्त्रगणताडनत्रुटितगर्वनिर्वेदवान्
भवप्रणिधिसेवितं भजतु भोगवर्गं पुनः ॥ २० ॥

अपि च

मलयपवनज्योत्स्नामल्लीमधुव्रतकूजित
प्रभृतिविजयस्कन्धावारप्रधानपताकया ।

---

शते अभिनिविष्टो भवति पुनः अपत्रपते लज्जते अतः अधुना प्रणिधिः सितासित पद्धतिः व्यक्ताव्यक्तमार्गः तत एव सिद्धापायः ॥ १८ ॥

प्रियसखेन वसन्तेन । सौक्तिकस्यावसरः सन्दर्शितः । तदेवाह ।

**स इति**—॥ पुरुषे असमग्रः असंपूर्णो योगः समाधिर्यस्य तस्मिन् सेसर्वास्त्रः मोक्षसमयः सोऽयं राधेयस्यासमग्रयोगत्वमसंपूर्णसाधनत्वं रथस्य वैगुण्यमधःपातः तेन विलक्षे व्रीडिते राधेये कर्णे फल्गुनस्यार्जुनस्येव ॥ १९ ॥

भगवतः समीहितसिद्धिः इष्टसिद्धिः समीचीना भवतु । उक्तमेव विशदयति ।

**विरक्तीति**—॥ विरक्तेः वैराग्यस्य कपटानां वञ्चनानां क्रमात् पारंपर्यतः वृजिनकोटिभिः पापसमूहः दुर्दमे अविनाश्ये परप्रणिधिः परमात्मविषयप्रणिधिः स एव कर्दमः तस्मिन् पतितुमेकतानः एकाग्र इत्यर्थः पुमान् त्वदस्त्रगणैः ताडनेन त्रुटितः विच्छिन्नः गर्वः यस्य स तथा स एव निर्वेदवान् भवप्रणिधिना कामविषय समाधिना सेवितं भोगवर्गं पुनर्भजतु ॥ २० ॥

अन्यदप्याह **अपिचेति**—॥

हसितलपितक्रीडाचित्रैरनुभ्रूकृदभिख्यया
युवतिकथया योगी सत्पथसङ्गमुपैति कः ॥ २१ ॥

कामः—सखे सर्वथा नूनमविचक्षणो विवेकः यत्सागरतरणगगनातिलङ्घनमरीचिकाचर्वणग्रहीतलमज्जनादिवद्दशक्यमेव समाधिलाभमाधिव्याधिशालिनः पुरुषस्य बालिशइव साधयितुमीहते

अपि च

पुरुषमजहद्भोगश्रद्धापुरस्कृतसंभ्रमं
विषयमदिरास्वादक्षीबं विमोचयितुं स्थितः ।
अमृतमिलितद्राक्षावल्लीफलद्रवसंपदा
ममरतरुणीबिंबोकानामवैति न वैभवम् ॥ २२ ॥

दृश्यतां पुनरियमुभयतः पाशारज्जुः

---

मलयपवनेति—॥ मलयपवनः मलयानिलः ज्योत्स्ना चन्द्रातपः मल्ली मल्लिकाकुसुमानि मधुव्रतानां कूजितं झंकारः एतत्प्रभृतिकस्य विजयस्कन्धावारस्य विजयार्थसेनायाः प्रधानपताकया मुख्यध्वजभूतया हसितं हासः लपितञ्च भाषणं क्रीडा विभ्रमाः एतान्येव चित्राणि तैरनुभ्रूकृदभिख्यया अत्यन्तकान्त्या युवतिकथया को वा योगी सत्पथसंगं वैराग्यमुपैति ॥ २१ ॥

कथमविचक्षणत्वमित्यत्राह यदिति—॥ मरीचिकायाः मृगतृष्णायाः चर्वणं भक्षणं ग्रहीतलं मज्जनं अवगाहनं आदिशब्देन ज्वालापानादिग्रहणं आधिमनःपीडा व्याधिः शरीरपीडा ।

अविचक्षणत्वे हेत्वन्तरमाह अपिचेति—॥

पुरुषमिति—॥ अजहद्भोगश्रद्धया अत्यजता भोगादरेण पुरस्कृतः संभ्रम उद्योगो यस्य तं युवतिरेव मदिरा तस्यास्वादः पानं तेन क्षीबं मत्तं पुरुषं मोचयितुं स्थितः कृतसंकल्पः विवेकः अमृतेन सुधया मिलितं मिश्रं यद्द्राक्षावल्लीफलं तद्द्रवस्य तद्रसस्य संपद इव संपदो येषां तेषां अमरतरुणी बिंबोकानां देवस्त्रीविभ्रमाणां वैभवं नावैति न जानाति ॥ २२ ॥

उभयतः पाशारज्जुरियं दृश्यतां । उक्तार्थमेव विशदयति—

विवेकावष्टम्भादुपजनितवैराग्यविभवो
यदि क्रुद्ध्येन्मह्यं भवति स कथं क्रोधविजितः ।
अथ त्यक्तक्रोधो यदि कथमपक्रामयतु मां
सुधा कामक्रोधप्रशमनकथा मूढमनसाम् ॥ २३ ॥

ततः प्रविशति विकृतवेषः क्रोधः—

क्रोधः—ससम्भ्रममुपसृत्य स्वस्ति सुहृदे स्वैरसंचारविजितविवेकविभवाय कुसुमधन्वने कः खल्वसौ विवेकवशवर्ती कामक्रोधप्रशमनकथा वृथा जल्पमुपपादयति ( विकटं परिक्रम्य, साट्टहासं )

अयमहमुद्भटप्रथनचारभटारभटी
नटपतिरुत्थितः कथमुदेति विवेककथा ।
यदनुविधायिदैत्यभयसंज्वरितासु सुधा
सुरसुभटीपयोधरतटीषु पटीररसः ॥ २४ ॥

विवेकेति—॥ विवेकावष्टम्भात् आश्रयेण उपजनितः वैराग्यस्य विभवो यस्य सतथा मह्यं यदि क्रुद्ध्येत् क्रोधविजितः क्रोधेनविजितः कथं न भवति क्रोधविजितो भवत्येवे त्यर्थः । अथ शब्दः पक्षान्तरं द्योतयति त्यक्तक्रोधो यदि मां कथमपक्रामयतु मद्विषयकोपाभावे मां कथमतिक्रामेत् अतः मूढमनसां कामक्रोध प्रशमनकथा कामक्रोधयोः प्रशमनप्रसंगः सुधा वृथा प्रसंगमात्रमेव नतु तत्संभव इति भावः ॥ २३ ॥

एवं प्रसक्तस्य क्रोधस्य प्रवेशमाह तत इति—॥ विकृतवेष इति रोषाधिक्यद्योतनं ।
स्वैरसंचारेण विजितं विवेकवैभवं यस्य तस्मै विवेकस्य वशेवर्तत इति वशवर्ती कामक्रोधप्रशमनकथायाः वृथाजल्प व्यर्थजल्पं उपपादयति असौ कः खलु कीदृश इत्यर्थः । विकटं विस्तृतं यथाभवति तथापरिक्रम्य दर्पेण अट्टहासं स्वाभिप्रायं वर्णयति ।

अयमिति—॥ उद्भटे क्रूरे प्रथने युद्धे चारः संचारो यस्य भटस्य तस्यारभट्यां उद्धतनृत्ते नटपतिः नर्त्तकः अयमहमुत्थितः अत्र विवेककथा कथं समुदेतु मम सन्निधौ नोदेति इतिभावः यस्यमम अनुविधायिभ्यः अनुवर्त्तिभ्यः दैत्येभ्योयद्भयं तेन सञ्ज्वरितासु संजात तापासु सुरसुभटीनां देवयोषितानां पयोधराणां कुचानां तटीषु प्रदेशेषु पटीररसः चंदनपंकः सुधाव्यर्थो भवति । मदनुवर्तिदैत्यनिमित्तभीतितप्तासु सुराङ्गनाकुचतटीषु निक्षिप्त चन्दनपङ्कः क्षणेन पांशुर्भवति नतु तापशान्त्यै इति भावः ॥ २४ ॥

कामः-(स्वागतं प्रियसुहृदे मत्प्रतिपक्षनियतमन्यवे मन्यवे महारथायसमागतोऽसि च स्वामिकार्यनिर्वहणसमयमनुचिन्त्यमत्साहाय्यकमनोरथेनवर्तयसि च स्ववशेवशिनोमहेश्वरादीन् अहोनितंमहाराजेन ।

किं च

मुधारम्भेडम्भे मयि च मदनेमुक्तकदने
मितोत्साहेमोहेवृजिनगहने व्याप्तदहने ।
अवज्ञालेशाद्यैरपिखलुभवानिन्धनशतैः
प्रदीप्तः प्रत्यञ्चं प्रणिधिमुपरोद्धुं प्रभवति ॥ २५ ॥

बसन्तः—नन्वसौपवनपावकसमागमः यदुतकामस्यतवचसंगतं तदिहकिमिति सामग्रीसंभवेसाध्यसंपत्तावुदास्यते, अनुसरतिखलूत्साहमभिलषितसिद्धिः एतदेवचेदानीमात्मसंभवेन प्रियसुहृदापुनः पुनरभिहितमभिमतप्रतिलम्भनमनुपश्यामि ।

---

मत्प्रतिपक्षे नियतः स्थिरो मन्युः कोपो यस्य तस्मै मन्यवे क्रोधाय स्वागः शोभनं आगतमागमनं किमितिशेषः । मत्साहायिकमनोरथे मत्साहायिके साहायिकं साहायकृत्यं तस्मिन्मनोरथेन आशया वशिनः जितेन्द्रियानपि महेश्वरादीन् आदिशब्देन दुर्वासप्रभृतयो गृह्यन्ते स्ववशे त्वदधीनतायां वर्तयसि । महाराजेन महामोहेन । तत्कथमित्यपेक्षायां त्वमेवं विधः खल्वित्याह–।

मुधारम्भेति ॥ डम्भे मुधारम्भे व्यर्थारम्भे मदने मुक्तकदने त्यक्तपीडे मोहेमितोत्साहे अल्पोत्साहे वृजिनमेवगहनं वनं तस्मिन्व्याप्तदहने व्याप्तस्सर्वत्रप्रसृतः दहनः यस्मिन्तथासति पापाटव्यां दाधायामपीत्यर्थः अवज्ञायाः अवमत्याः लेशः स्वल्पांशः तदाद्यैरपीन्धनशतैः प्रदीप्तः प्रज्वलितः प्रत्यञ्चमन्तर्मुखं प्रणिधिमुपरोद्धुं प्रभवति शक्नोति । अतो महाराजेन जितमितिभावः ॥ २५ ॥

कामक्रोधयोः सङ्गमः पवनपावकयोः समागम इवदुस्सह इतिभावः । सामग्रीभेदानां साधनभेदानां सम्भवे सति साध्यसम्पत्तौ किमित्युदास्यते उदासीनतया स्थीयते । उत्साह एवकार्य इत्याह अनुसरतीति–।

एतद्वक्ष्यमाणं प्रियश्चासौ सुहृच्चतेनात्मसम्भवेन कामेन पुनः पुनरभिहितं अभिमतस्यप्रतिलम्भनं प्रापकं । तत्किमित्यत आह यदुतेति–॥

यदुत

रतिपतिवारयोषिदनुपालितरत्नलता
स्तबकविलोभनीयललितस्तनभारनताः ।
अमरमृगेक्षणाः परिचरन्तु विरक्तिधनं
मदनधनुर्गुणभ्रमरमन्थरतारदृशः ॥ २६ ॥

कामः—सखे कालोचितकार्यप्रतिसंधायकः खलु कालतल्लजो वसन्त तदेनमेव विबुधपतिनगरवेशनारीपुरस्सरं नासीरयोधमहमधिज्यधनुरनुव्रजामि त्वमपि परितः परिवृत्तदृष्टिः पार्ष्णिमभिरक्षन् सावधानमन्वीयेथा

सर्वे तथानुसर्पन्ति

वसन्तः—श्रूयतामयमिह महामोहसमरसैनिकधुरंधराभ्यां मन्मथप्रतिघाभ्यां मामको व्याहारः अयमेवावसरस्संयमारम्भं सौप्तिकेन संस्थापयितुं यत्र समुत्थितं चतुरुदधिवर्धनं चान्द्रमसं महः अद्य खलु पुरतस्सरन्त्यमी मुग्धयुवतिमुखचन्द्रकिंकरस्य कुमुदिनीपतेरुदयवार्ताहराः कतिचन करणाङ्कुराः—

---

रतिपतिवारयोषिदिति—॥ रतिपतेः वारयोषिद्भिः वेश्याभिः अनुपालितायाः वर्धितायाः रत्नलतायाः रत्नमयालतायाः स्तबक इव लोभनीयललितश्चासौ स्तनभारः तेन नताः अमरमृगेक्षणाः अप्सरसः मदनधनुषो गुणमौर्व्यः ते च ते भ्रमराश्च तैव मन्थराः सुन्दराः तारादीर्घाश्च दृशः यासां ताः तथोक्ता विरक्तिः धनं यस्य तं पुरुषं परिचरन्तु ॥ २६ ॥

सखे क्रोध कालोचितस्य कार्यस्य प्रतिसन्धायकः स्मारकः कालतल्लजः काचचेष्टाः विबुधपतिनगरवेशनार्यः अप्सरसः पुरस्सरा अग्रेसरा यस्य तं नासीरयोधं सेनामुखसुभटमेनं वसन्तं अधिज्यमारोपितमौर्वीकं धनुर्यस्य स तथा पार्ष्णिं पृष्ठभागमभिरक्षन् अन्वीयेथाः अनुगच्छेत्यर्थः ।

महामोहस्य समरे धुरन्धराभ्यां धूर्वहाभ्यां मदमप्रतिघाभ्यां कामक्रोधाभ्यां व्यावहारः उक्तिः । संयमस्य समाधेरारम्भं सौप्तिकेन संस्थापयितुं मार्गायितुमयमेवावसरः यत्रावसरे चतुरुदधिवर्धनं चतुर्णां उदधीनां वर्धकं चान्द्रमसं महः ज्योत्स्ना समुत्थितं मुग्धानां युवतीनां मुखान्येव चन्द्राः तत्किंकरस्य उदयवार्तां आहरन्तीति उदयवार्ताहराः ।

अमी च

तिमिमुखपीतमुक्तसितसागर पूरनिभा
रजनिविलासहासललिताहरिणाङ्ककराः ।
शुभघनसारमिश्रहरिचन्दनपङ्करुचः
स्फुटमनुलेपयन्तिपुरुहूतदिशाछुदृशं ॥ २७ ॥

अपि च

प्रथमस्य कान्तिमद्रेः
पश्यतमेतेनभाविता शशिना ।
मदजलकलङ्कभाजा
करटिनइवकर्णशंखेन ॥ २८ ॥

क्रोधः—सखेशम्बरासुरसूदन सूनृतवादी सोयं सुरभिः

अत्र हि

हरेरिह दिगन्तरे हसितदुग्धसिन्धुद्युतिः
श्रियंकुमुदवासिनीं प्रजनयत्यसौचन्द्रिका ।

---

तिमीति—॥ तिमीनां मत्स्यविशेषाणां मुखैः पीतः पुनर्मुक्तश्च यस्सित सागरः तस्य पूराणां प्रवाहाणां निभाः तुल्याः रजनि रात्र्याः विलासेन भासइवललिताः सुन्दराः शुभेन घनसारेण मिश्रः यश्च हरिचन्दनपङ्कः तस्य रुच इव रुचाः येषां ते तथा हरिणाङ्कस्य चन्द्रस्य कराः पुरुहूतदिशैवसुदृक् तामनुलेपयन्ति स्फुटम् ॥ २७ ॥

अन्यदाप्याह अपिचेति—॥

प्रथमस्येति— प्रथमस्य प्राचीनस्याद्रेः शशिना भावितां कान्तिं मदजलकलङ्क मदजलेन जातं कलङ्कं मालिन्यम्भजतीति तत्भाक् तेन कर्णशङ्खेन भावितां करटिनः गजस्य कान्तिमिव पश्यतं अवलोकयतं ॥ २८ ॥

सूनृतं सत्यंहितं तद्वक्तुंशीलमस्यास्तीति सूनृतवादी । तदेव विशदयति—

हरेरिति—॥ इहहरेः इन्द्रस्य दिगन्तरे प्राच्यांदिशीत्यर्थः हसितस्यसंजात हासस्य दुग्धसिन्धोः द्युतिरिव द्युतिः यस्यास्सासौ चन्द्रिका कुमुदवासिनीं कुमुदस्थान श्रियं प्रजनयति कुमुदशोभामुत्पादयति । मधुराणां तारकाणां नक्षत्राणां उन्मीलन

मनागिव विवर्तितं मधुरतारकोन्मीलने
निशामय निशामुखे तिमिरकन्दलं कुन्तलं ॥२९॥

कामः—संभावनीयः खल्वसौ बहुलतरतमःपटलपाटनपटीयस्तर किरणस्समाक्रान्तपशुपतिजटामण्डलस्सखा मे तारकेश्वरः

अयं च

कुर्वन्कामपि कौमुदीं कुमुदिनीसंमोददानव्रती
सान्द्रानन्दरथाङ्गनामतरुणीसन्तापचिन्तामणिः ।
शृङ्गारागमदेशिकस्त्रिजगतामानन्दनाडिन्धमो
रुन्धे सर्वदिशां निरन्तरतमस्तन्द्रालुतां चन्द्रमाः ॥३०॥

अपि च

पदे विष्णोरेषा प्रभवमधिगम्य प्रसृमरा
स्फुरत्ताराफेनस्तबकपरिपाटीपरिगता ।
चरन्ती पूर्वाद्रेरमरतटिनीसंप्लवसखी
तमिस्राकालिन्दीं शबलयति चन्द्रांशुपटली ॥३१॥

---

मुद्गमो यस्मिन्तस्मिन् निशामुखे सन्ध्यायां च मनागल्पं विवर्तितं कुन्तलमिव स्थितं तिमिरकन्दलं तमोवृन्दं निशामय पश्य ॥ २९ ॥

बहुलं सान्द्रं यत्तमःपटलं तमस्समूहस्य पाटने पटीयस्तरः अतिशयेन पटीयान् किरणो यस्य स तथा समाक्रान्तः पशुपते र्जटामण्डलो येन स तथा तारकाणां नक्षत्राणां ईश्वरः ।

कुर्वन्निति—॥ कुमुदिनीनां संमोदस्य दाने व्रतं नियमो अस्यास्तीति व्रती सान्द्रातङ्कानां रथाङ्गनाम्नां तरुणीनां चक्रवाकस्त्रीणां सन्तापस्य चिन्तामणिः प्रदाता शृंगारागमस्य कामशास्त्रस्य देशिक उपदेष्टा त्रिजगतां आनन्दनाडिन्धमः आनन्द जनकनाडीधमनपरः आनन्दहेतुरिति यावत् चन्द्रमाः सर्वासां दिशां निरन्तरेण तमसां तन्द्रालुतां जडतां रुन्धे ॥ ३० ।

पदेति—॥ विष्णोः पदे वियति चरणे च प्रभव मुत्पत्तिमधिगम्य प्रसृमरा प्रथमानाः स्फुरन्त्यः तारा एव फेनस्तबक डिण्डीरमण्डलानि तेषां परिपाटीभिः पंक्तियाभिः परिगता पूर्वाद्रेः पूर्वाचलस्य चरन्ती प्रसरन्ती अतएव अमरतटिनो संप्लवस्य समा समाना चन्द्रांशुपटली तमिस्रा तमः स इव कालिन्दी तां शबलयति ॥ ३१ ॥

सखेक्रोधपश्यमेसहायसंपत्तिं

ताराकान्तः प्रियसुहृदयंचन्द्रकेयंवयस्या
बाणारम्भाद्बहुमतिपदंबान्धवोमेवसन्तः ।
त्वंचत्राताविपदुपगमेक्रोधदुर्वारवेगः
कोवामह्यंकुसुमधनुषे तिष्ठतेजीवितार्थी ॥ ३२॥

क्रोधः—सखे अनुकूलाहिविधिः किंवामनानुकूलयति

अपि च

विजेतुकामः कामन्त्वांनिष्कामइतिकाकथा ।
त्वन्निवर्तननिष्कामस्सकामस्त्वय्यनुज्झिते ॥ ३३ ॥

कामः—अलमनेनविलम्बहेतुनाव्याक्षेपेणउपक्रान्तसमाधिरस्माभिरुप सर्पणीयः पुरुषः ( सर्वे तथाकुर्वन्ति )

वसन्तः—पश्यतमेनं परमपुरुषचरणयुगलनिगलिताशयं परिहृत बहिर्विषयरागंप्रतिपक्षकारिणाविवेकेनप्रचोदितं प्रक्रान्त योगंपुरुषं—

---

सहायसम्पत्तिं सहायसम्पदं तामेवाह—

**ताराकान्त इति**—॥ ताराकान्तः चन्द्रः बाणानामारम्भात् सृष्टेः बहुमति-पदं बहुमतेः बहुमानस्य पदं स्थानं हे क्रोध दुर्वारः वारयितुमशक्यः वेगोयस्य सतथा त्वञ्च विपदपगमे प्राप्तौ त्राता अतः कुसुमधनुषे मह्यं जीवितार्थी कोवातिष्ठते आत्मानं प्रकाशयंस्तिष्ठति नकोप्ययेतिष्ठतीत्यर्थः ॥ ३२ ॥

किंवाम नानुकूलयति सर्वमनुकूलमेव करोति । अन्यदप्याह **अपिचे ति**—॥

**विजेतुकामः इति**—॥ हे कामत्वां विजेतुं कामइच्छा यस्य सतथा त्वन्निव-र्तने तव निवर्तने निष्काम आशारहितः त्वय्यनुज्झिते अत्यक्ते सकाम एव भवति ॥ ३३ ॥

व्याक्षेपः प्रसक्तान्तःमुपक्रान्तः आरब्धा समाधिर्येन स तथा ।

परमपुरुषस्य भगवतः चरणयुगले निगलितं मानसं यस्यतं परिहृतः बहिर्विषयेषु शब्दादिषु राग इच्छा यस्यतं प्रतिपक्षं युक्ततया ज्ञानं करोतीति तत्कारी तेन पुरुषं पश्यतं ।

अयं हि

भयस्थानग्रन्थान्परिपठति निद्राति च मुहुः
स्वमात्मानं पश्यत्युपचरति देहञ्च विधिना ।
निवृत्तिं दुःखाब्धेरभिलषति रज्यत्यपि सुखे
द्विधावृत्त्या दुःख्यन् पुरुष इह डोलायित इव ॥३४॥

कामः—सखे क्रोध अद्य खलु संक्षोभणीयदशामनतिक्रान्त इति समर्थितं वसन्तेन दूरावधूनबाह्याभ्यन्तरवैरिभिरपि दुर्जया अस्मत्सहायिनी अनादिसन्ततिविचित्रप्ररोहा वैषयिकी वासना ।

भवत्वतिपतिष्यतो भवपयोधिमेकान्ततो
रतिस्सह मुमुक्षया ललितभाषितं योगिभिः ।
तदप्यवसरे क्वचित्सपदि पार्ष्णिमालम्बते
ममत्वशतवासनारचितवारवाणं मनः ॥ ३५ ॥

भयेति—॥ भयस्थानानि भयजनकान् ग्रन्थान् आध्यात्मिकादितापत्रयप्रतिपादनद्वारा भयहेतून् ग्रन्थान् परिपठति अनेन सत्वगुणोन्मेषो दर्शितः मुहुर्निद्राति च अनेन तमोगुणोन्मेषः स्वमात्मानं स्वस्वरूपं पश्यति देहं चोपचरति दुःखान्येव अब्धि तस्य निवृत्तिमभिलषति सुखे रज्यति रागवान्भवति एवं द्विविधया वृत्या द्विप्रकारवर्त्तनेन दुःख्यन् पुरुषः डोलायित इव ॥ ३४ ॥

संक्षोभणयोग्यां दशां अनतिक्रान्तः पुरुष इति समर्थितं वसन्तेन दूरे अवधूत बाह्या आन्तरश्च वैरिणो यैस्तैः बाह्या मलयमरुतादयः आन्तराः कामक्रोधादयः पुरुषैरिति शेषः अनादिसन्तत्या सिद्धः विचित्रः प्ररोहो अङ्कुरो यस्यास्सा तथा वैषयिकी शब्दादिगोचरा वासना ।

तदेव उपपादयति तथाहीति—॥

भवत्विति—॥ भवपयोधिं संसारसमुद्रं अतिपतिष्यतः पुरुषस्य मुमुक्षया सह रतिरेकान्ततः भवतु मुमुक्षयास्माकं भगवति प्रीतिर्निश्चयेनास्तु तदपि तथापि योगिभिः ललितया मृदुत्वेन भाषितं उक्तं ममत्वशते वासनयारचितं वारवाणं कञ्चुकं यस्य सत्तया मनः क्वचिदवसरे पार्ष्णिमालम्बते आरुरुक्षोः पुरुषस्य मुमुक्षया सह भगवत्प्रीतो वर्त्तमानायामपि चञ्चलं मनः ममकारशतवासनावृतं सत् तदनन्वेतीतिभावः ॥३५॥

वसन्तः—इदमप्यपरमवधारणीयमरातिजनभयंकराभ्यां भवद्भ्यां सर्वसङ्गनिवृत्तस्यापिसंमानागतिस्समाधिपरिपन्थिनी अतएवखलु अनुचिन्तितहिरण्यगर्भवचसस्संवर्त्तभरतविदुरादयो दुरितोच्छेदकारणं जनावमानमिच्छन्तउन्मत्तचर्यामभ्यनैषुः तदिदानीं यावदयमवमानापेक्षामादीत ततः पूर्वमेवसंमानभङ्गादिकं द्वारीकृत्यप्रसभं चित्तक्षेत्रप्रवेष्टव्यं क्रोधेन—

अथवा

शृणोतिकथयत्यसौ परिचिनोतिसंपृच्छते
समर्चयतिगायति स्पृशतिपश्यतिस्तौति च ।
इतीवनियतादरो मुरभिदंघ्रिसेवारसे
नभेत्तुमिहशक्यते स्थिरविवेकदुर्गस्थितः ॥ ३६ ॥

अपि च

वितथपरिग्रहत्यजननिर्वृतबुद्धिरसौ
तदितरसंग्रहेपि विधिनैवपरन्नियतः ।

---

अरातिजनस्य वैरिजनस्य भयंकराभ्यां संमाननायाः आगतिः प्राप्तः अनुचिन्तितं अनुसंहितं हिरण्यगर्भस्य वचो यैस्ते तथा

संमानना परां हानिं योगर्धेः कुरुते यतः ।
जनेनावयतो योगी योगसिद्धिंचविन्दति ॥
तस्माच्चरेत वै योगी सतां वर्त्म नदूषयन् ।
जना यथावमन्येरन् गच्छेरन् नैवसंगतिं ॥

इत्यादिकं हिरण्यगर्भवचः अभ्यनैषुः अभिनयन्तिस्म । अयंयावत् अवमानापेक्षां आददीत इदानीं तावदिदानीमेव ततः पूर्वमेव संमानभंगादिकं द्वारीकृत्यप्रवेष्टव्यं

शृणोतीति—॥ असौ हरिगुणान्परेभ्यः शृणोति श्रोतृभ्यः कथयति स्वयं परिचिनोति ज्ञानिनः संपृच्छते हरिंसमर्चयति तद्गुणान् गायति तत्पादौ स्पृशति तद्वपुः पश्यति तमेव स्तौति च स्थिरे विवेकएव दुर्गे स्थितस्सन् मुरभिदः अङ्घ्रयोः सेवायां से प्रीतौ इतिवदुक्तप्रकारेण नियतादरो भवति अतएव भेत्तुंन शक्यते ॥ ३६ ॥

वितथेति —॥ वितथाः व्यर्थाः परि गृह्यन्तइति परिग्रहाः गृहक्षेत्रादयः तेषां जनेननिर्वृता तुष्टा बुद्धिर्यस्य सतथा तेभ्य इतरे तदितरेषां परिग्रहाणां संग्रहेपि

उपनतमपिधर्म्यमुपभोगमपोह्यभज
त्यजगरवृत्तिमात्रमवधीरितभूतहतिः ॥ ३७ ॥

कामः—(सविलज्जस्मितं) सखेनूनमप्रगल्भइवसंग्रामसमयेसाध्वसमवलम्बसे कालोपपन्नकार्यंनप्रतिसन्धत्से

ऋतुश्रेष्ठस्त्वन्नस्सुहृदमितभोगार्हविभवः
स्वयंकामस्सोहंसुरनरतिरश्चस्स्ववशयन् ।
अयंक्रोधः क्रूरप्रकृतिरसहन्नस्मदहितं
त्रिभिः कार्यंद्रौणिप्रभृतिविहितं सौप्तिकमिह॥३८॥

वसन्तः—सखे प्रतिसंहितकार्यएवाहमस्मि अवस्कन्दसमयमतिक्रामतिपुरुषेकथमस्माभिरमोघवृत्तिभिर्भवितव्यमितितुविमृशामिपाटच्चरलुण्ठितेषु भवनेषु जाग्रतोपि यामिकाः किमुपकरिष्यन्ति ।

---

विधिना शास्त्रेणैव परंनियतः नियतं निर्धूतः उपनतं प्राप्तं धर्म्यं धर्मादनपेतमु भोगं विषयानुभवं अपोह्य अवधीरिता निरस्ताभूतहतिः भूतहिंसा येन सतथा अजगरवृत्तिमात्रं भजन्ति ॥ ३७ ॥

एवमस्य दुर्धर्षत्वात् स्वमनोषितं न सिद्ध्यतीतिलज्जा परेष्ववज्ञयास्मितं ताभ्यां सहितं यथाभवति तथा । साध्वसं भयं न प्रतिसंधत्से न स्मरसीत्यर्थः ॥

किं तत्कार्यमित्यत आह ।

ऋत्विति—॥ ऋतूनां श्रेष्ठः अमितानां भोगानामर्हो योग्यो विभवः संपत् यस्य तथा त्वं नः अस्माकं सुहृत् मित्रं सुरनरतिरश्चः स्ववशयन स्ववशान् स्वाधीनान् कुर्वन् अस्मदहितं पुरुषंमसहन् अस्माभिस्त्रिभिः द्रौणिरश्वत्थामा तत्प्रभृतिभिर्विहितं सौप्तिकं कार्यम् ॥ ३८ ॥

प्रतिसंहितं अनुस्मृतं कार्यं येन सतथा अवस्कन्दनं पीडनं तत्समयं पुरुषे अतिक्रामति । अमोघा सफला वृत्तिर्व्यापारो येषां तैः अस्माभिः कथं भवितव्यमिति तु विमृशामि । सौप्तिकसमयातिक्रमे अस्मद्व्यापारो व्यर्थस्स्यादिति विमृशामीति भावः । उक्तेऽर्थे दृष्टान्तमाह पाटच्चरेति—। पाटच्चरैः चोरैः लुण्ठितेषु सत्सु यामिकाः जाग्रतः अनिद्राणापि किमुपकरिष्यन्ति न किञ्चिदपीत्यर्थः ।

अयं हि

प्रचेतुमनघांवृत्तिमपचेतुमपक्रियां ।
भजतेविश्वकर्त्तारं भिषज्यन्तमिवातुरः ॥ ३९ ॥

क्रोधः—( ससंरम्भं ) श्रोतव्यमेतत्सुरभिणासुहृदा च कामेनमामकमनीषितनिष्पादनकौशलं यदुत

जमदग्निमुखान् परित्यजन्
परिगृह्णन्दशकन्धरादिकाम् ।
विनिपातितवानुपायतः
पुरुषानद्भुतपौरुषानहम् ॥ ४० ॥

वसन्तः—प्रख्यातमिदमित्थम्भवतश्चातुर्यं तथाप्यत्यन्तवीतरागेकद्व तत्रावकाशः ।

---

कुत इत्यत आह अयंहि—इति ।

प्रचेतुमिति—॥ अनघांनिर्दोषां वृत्तिं प्रचेतुं संपादयितुं अपक्रियां विपरीत वृत्तिं अपचेतुं त्यक्तुं भिषज्यन्तमातुर इव विश्वकर्तारं भजते निवृत्तिधर्म सिद्ध्यर्थं प्रवृत्तिधर्मसिद्ध्यर्थञ्च भगवन्तमेवाश्रयतीति भावः ॥ ३९ ॥

ससंरंभं सोत्साहं सुहृदेति पदं उभयत्रान्वेति । मनीषितस्य निष्पादने उत्पादने कौशलं सामर्थ्यं तत्किमित्यत आह ।

जमदग्नेति—॥ जमदग्निमुखान् जमदग्निप्रभृतीन परित्यजन जमदग्निरपि धन्तमपि हैहयं नशशाव एवमन्येपिकेचित्त्वमावन्तः दशकन्धरादिकान रावणप्रभृतीन गृह्णन् रावणादयोहिति ।

द्विधाभज्येयमप्येवं न नमेयं कथंचनेति ।

क्रोधवशाः अद्भुतं पौरुषं पराक्रमो येषां तान पुरुषान् उपायतोविनिपातितवान् ॥ ४० ॥

इत्थं एवंभूतं भवतश्चातुर्यं प्रख्यातं वीतरागे पुरुषे तवावकाशः कद्वव क्वीदृश इत्यर्थः ।

क्रोधः—( हाहाकारमाम्रेडयन् ) अस्त्येवसंमतोऽत्राप्यवकाशः यथा

पुंसस्त्यक्तपरिग्रहस्यविषयग्राहोभिभूतस्याप्यहं
कन्थाविष्टरकुण्डिकादिहरणप्रच्छादनाद्याश्रयः।
अन्तःक्षोभमलीकजल्पमसदारोपस्पृहांपैशुनं
संमोहादि च संमुखय्यसहसादास्येसमाधिक्षयम्॥४१॥

किं च महेश्वरप्रमुखमहापुरुषचित्तविक्षोभकस्यसमाहितहृदयसमारम्भविघटने किमत्राश्चर्यं यतः

बिभर्तु विबुधेश्वरं क्षिपतुदानवानीकिनीं
भिनत्तुकुलपर्वतान् वनशतानि मृद्नातुवा।
अयत्नविधृतक्षितिस्तबकशेखरालङ्कृतः
किमद्भुतपदं भवत्ययममीभिरैरावणः॥ ४२॥

आम्रेडयन् पुनःपुनर्वदन् अत्रापि संमतोऽवकाशोऽस्त्येव।

कथमित्यत आह

पुंसइति—॥त्यक्ताः परिग्रहाः येन तस्य विषयाः शब्दादयः तु एव ग्राहाः तैरुज्जितस्यापि पुंसः कन्था जीर्णवस्त्रं विष्टरमासनं कुण्डिका कमण्डलुः आदिशब्देन दण्डादीनां ग्रहणं एतेषां ग्रहणमपहारः प्रच्छादनं तिरोधानं आदिशब्देन स्थानान्तरनिवेशः एतान्याश्रयो यस्य सतथा। अन्तः मनसि क्षोभं कालुष्यं अलीकजल्पमसत्यवचनं असतो सत्यस्यार्थस्यारोपे स्पृहां पैशुनं कर्णजापं संमोहादि कृत्यमोदां आदिशब्देन महदतिक्रमो गृह्यते संमुखय्य प्रकाश्य समाधिक्षयं दास्ये॥ ४१॥

महेश्वरप्रमुखाः ये महापुरुषाः तेषां हृदयविक्षोभकस्य समाहितहृदयानां संरम्भस्य विघटने भेदने आश्चर्याभावमेव दृष्टान्तेनाह—

बिभर्त्विति—॥ विबुधेश्वरं देवेन्द्रं। बिभर्तु दधतु दानवानीकिनीं दानवानां अनीकिनीं सेनां क्षिपतु हन्त्वित्यर्थः कुलपर्वतान् भिनत्तु दलयतु वनानां शतानि मद्नातु ध्वंसयतु अयत्नं यथा भवति तथा विधृता क्षितिरेव स्तबकशेखरं तेनालंकृतः ऐरावणः ऐरावतः अमीभिः विबुधेश्वरभरणादिभिः अद्भुतपदं अद्भुतस्थानं भवति किं न भवत्येव तथा ममापि समाहितहृदयसंरंभविघट्टनमाश्चर्येन भवतेत्यर्थः॥ ४२॥

कथमवितथत्वमित्यत्राह—

कामः-सखे पुष्पाकर क्रोधोदोरितमप्यवितथमिदमवधारणीयं ।

निद्रामुग्धनिमीलितेष्वसुलभन्निर्धूतनिम्नोन्नतं
निद्राणाखिलवर्णभेदनियमं विष्वक्प्रवृत्तोदयं
कः क्रोधोद्भवमुत्सहेततरितुं कल्पान्तकादम्बिनो
कालोद्वेलकलिन्दशैलतनयाकल्लोलकालन्तमः ॥४३॥

अपि च वाल्मीकिप्रभृतिभिर्महर्षिभिरप्युद्घोषितंमामकं महिमानंमावमंस्थाः अहह

विराधकरिकेसरी विशिखवह्निदग्धार्णवः
प्रभूतखरदूषणप्रभृतिनैर्ऋतव्यूहजित् ।
विलूनदशकन्धरोमृदितकुम्भकर्णस्तदा
मदस्त्रजनिते स्थितः क्वचनलाघवेराघवः ॥४४॥

निद्रेति-॥ निद्रासुप्तिः मुग्धिः मोहः ताभ्यां निमीलितेषु पुरुषेषु असुलभमनेन प्रविद्धतमसोत्रैलक्षण्यमुक्तं निर्धूते निम्नोन्नते यस्मिन् तत्तथा निम्नोन्नतशब्दाभ्यां महती वस्तुनी गृह्येते निद्राणाः अखिलवर्णभेदनियमाः वर्णाः शुक्लादयो ब्राह्मणादयश्च यस्मिन् तत्तथा विष्वक् सर्वतः प्रवृत्तः उदयउत्भवो यस्य तत्तथा कल्पान्ते प्रलयेयाकादम्बिनी मेघपङ्क्तिः तस्याःकाले समये उद्वेलायाः कलिन्दशैलतनयाया यमुनायाः कल्लोल इव कालं नीलं क्रोधोत्भवं तमः कउत्सहेत कोपि नोत्सहेतेत्यर्थः ॥ ४३ ॥

स्ववैभवातिशयमाह अपिचेति-।

वाल्मीकिप्रभृतिभिः इत्यत्र प्रभृतिशब्देन व्यासादयो गृह्यन्ते । स्वातिशयस्मरणजनितादाश्चर्या (अहहेति-)।

विराधेति-॥ विराध एव करी यस्य केसरी सिंहः विशिखवह्निना बाणाग्निना दग्धाः अर्णवाः प्रभूताः अधिका खरदूषण प्रभृतयो ये नैर्ऋताः राक्षसाः तेषां व्यूहं जयतीति व्यूहजित विलूनः त्रुटितः दशकन्धरोयेन स तथा मर्दितः मथितः कुम्भकर्णो येन स तथा राघवः मदस्त्रजनिते क्वचनलाघवे स्थितः अभूत् अन्ये किं पुनरिति भावः ॥ ४४ ॥

कुत एव मुच्यत इत्यत आह त्वयेति-॥

वसन्तः—काम साधुकृतं भवता

कामः—वयस्य आत्मानं बहुमन्येथाः त्वदायत्त वृत्तिना खलु मया सर्वमेतदाचरितं ।

वसन्तः—हन्त मकरध्वज महावीराणामपि भवति वैक्लव्यं भवत्प्रभावेन यदुन्मत्तदशामप्यधिगच्छन्ति—

अथवा

रागोपलिप्तदृष्टिः प्रलपति मुह्यति विघूर्णति स्खलति ।
युवतिमदिरामदान्धो युक्तायुक्तं न जानाति ॥ ४५ ॥

(विचिन्त्य) यद्यपि दुर्जयौ युवां कामक्रोधौ तथापि किञ्चिन्मनसि मे परिवर्तते सहायभूयस्त्वं सर्वेष्वपि कार्येष्वयत्नसिद्धिकारणं, (पदशब्दं सूचयन्)

धर्मध्वंसधुरन्धरश्शमदमप्रारम्भसर्वंकषः
प्रज्ञावारिधिघस्मरः प्रणिदधत्प्रत्यूहमृत्युञ्जयः ।
मुक्तिप्रार्थनमोचनाय महतामोहेन संप्रेषित
स्तृष्णावारविलासिनीसहचरो लोभः किलोदीयते ॥ ४६ ॥

---

दत्ता प्रवृत्तिर्जीवनं यस्य तेन मया । वैक्लव्यं जाड्यं भवति ।

यदुन्मत्तदशामप्यधिगच्छति । पक्षान्तरमाह अथवेति—

रागोपलिप्तेति—॥ रागेण कामेनोपलिप्ता दृष्टिर्ज्ञानं यस्य स तथा प्रलपति जल्पति मुह्यति मूढो भवति विघूर्णति भ्रमति स्खलति प्रमाद्यति युवतिरेव मदिर मदः तेनान्धः युक्तायुक्तं युक्तमयुक्तं च न जानाति ॥ ४५ ॥

युवां दुर्जयौ यद्यपि तथापि किंचिन्मे मनसि वर्तते तदेवाह सहायेति—॥ सहायानां भूयस्त्वं कार्येष्वयत्नेन सिद्धिकारणं अस्मिन्नवसरे कस्यचिदागच्छतः पदशब्द तमयं पदशब्द इति तयोस्सूचयन्नाह ।

धर्मेति—॥ धर्मध्वंसे धुरन्धरः शमदमयोः प्रारम्भस्य सर्वंकषः कार्त्स्न्येन नाशकः प्रज्ञैव वारिधिः प्रज्ञावारिधिः तस्य घस्मरः भक्षकः प्रणिदधतां योगं कुर्वतां प्रत्यूहस्य विघ्नस्य यो मृत्युः तं जयतीति मृत्युंजयः प्रत्यूहवर्धक इत्यर्थः । मुक्तेः प्रार्थनस्य मोचनाय महतामोहेन संप्रेषितः तृष्णैव वारविलासिनी वेश्या तया सह चरतीति तत्सहचरः लोभः उदीयते उदेति किल ॥ ४६ ॥

कामक्रोधौ सहर्षमवलोकयतः

वसन्तः–विश्वहृल्लोभनो लोभइहाकार्यः ।

कामक्रोधौ–सुष्ठुचिन्तितं सुहृदावसन्तेन ।

कामः–छोटिकां ददाति ।

क्रोधः–सोद्घोषमनुमोदते ।

ततः प्रविशति लोभस्तृष्णा च ।

लोभः–

महामोहस्याज्ञां शिरसिनिदधानस्रजमिमा
महन्तृष्णाजानिस्त्वरितमिहलोभस्समुदितः ।
प्रदिष्टैस्तत्तादृक्प्रथिमविकटैर्हाटकमयै
रखण्डैर्ब्रह्माण्डैर्ममकइवतृप्तिं घटयिता ॥ ४७ ॥

तृष्णांपरिष्वज्य प्रिये

अशेषसुरनारीणामाभिरूप्यसमुच्चयैः ।
अजहद्यौवनान्तृष्णेविदधेत्वांविधिस्स्वयम् ॥४८॥

तदिदंनिदर्शयामि--

कनककलधौतशैल
प्रभृतिभिरपिहन्तपूरणैःक्षिप्तैः ।

विश्वेषां हृल्लोभनः हृदय लोभकारो आकार्यः आह्वातव्यः ।

छोटिक अङ्गुष्ठमध्यमाङ्गुलीभ्यां उत्पूतं शब्दं ददाति । उद्घोषः उच्चैः शब्दः तेन सहितं यथाभवति तथा अनुमोदते स्वानुभवं वर्णयति ।

महामोहस्येति–॥ इमां महामोहस्याज्ञां स्रजं शिरसि निदधानः तृष्णाजाया यस्य स तृष्णाजानिः लोभोऽहं समुदितः । तत्तादृक्प्रथिमभिः विकटैश्च हाटकमयैः स्वर्णमयैः अखण्डैरशेषैः ब्रह्माण्डैः प्रतिष्टैः दत्तैः ममतृप्तिं क इव घटयिता ॥ ४७ ॥

अशेषेति–॥ अशेषाणां सुरनारीणां आभिरूप्यस्य सौन्दर्यस्य समुच्चयैः पुञ्जैः ॥ ४८ ॥

पूर्वं श्लोके यदुक्तं तदिदं निदर्शयामि ।

कनेकेति–॥ कनककलधौतशैलौ सुमेरुकैलासौ तत्प्रभृतिभिः पूरणैः पूर्ति

तृष्णे भजतिसमृद्धिं
भूयोभूयस्तवोदरेकार्श्यम् ॥ ४९ ॥

तृष्णा—अ०अउत्ततुह्मवल्लहाणमहरमणिज्जत्तणं सव्वरमणिममभ हिर्यतिकिं अच्चरियं तहवि देवासुरघरगअसअलरअणोवहारेणमहसोभ गाणाइहारकेऊल मेहलणूउराइ तुग् करणिज्जाइ ।

लोभः--प्रिये ईषत्करमिदमभ्यर्थयसेनिर्जिताः खलुमयादेवासुरकिंनरकिंपुरुषविद्याधरमुनिमनुष्यतिर्यञ्चः यथापरस्परमेवव्यतिहन्यन्ते यथा वातुषकणमपिमेरुं मन्यन्तेतत्रतावद्धनदबिरुदविख्यातस्यत्र्यम्बकसखस्यमत्कृतामवस्थां आकर्णय

लब्धन्नमुञ्चति विलक्षमतिर्नभुङ्क्ते
धत्तेपुनः पुनरसौ महतीन्धनायां ।
निद्रारसन्नलभते महतांनिधीनां
रक्षापिशाच इवसंप्रतिराजराजः ॥ ५० ॥

आर्यपुत्रतववल्लभायाममरमणीयत्वंसर्वरमणीसमभ्यधिकमितिकिं आश्चर्यं तथापिदेवासुरगृहगतसकलरत्नोपहारेणममसौभाग्ययोग्यानिहारकेयूरमेखलनूपुराणित्वयाकरणीयानि

हेतुभः क्षिप्तै रपि तवोदरे कार्श्यं भूयोभूयस्समृद्धिं भजते उक्तं उदरकार्श्यं मन्येषामप्यभिरूपाणामप्युपलक्षकं ॥ ४९ ॥

ईषत्करमल्पयत्नसाध्यं । ईषत्करत्वं कथमित्यत आह निर्जिता इति— देवादीनां निर्जितत्वात् तत्तद्गृहगतरत्नानां सुलभत्वात् तैर्हाराटिकरणं ईषत्करमिति भावः । कथं ते निर्जिता इत्यपेक्षायामाह यथेति— यथाते परस्परमेव व्याहन्यन्त तथा निर्जिता, इत्यर्थः । प्रकारान्तरं चाह यथा तुषकणमपि मेरुं मन्यन्त इति तुषस्य कणमल्पांशं । धनद इति बिरुदेन विख्यातस्य केयमवस्थेत्यत आह ।

लब्धमिति—॥ लब्धं वस्तु न मुञ्चति विलक्षाव्रीलावती मतिर्यस्य स तथा करगतं वस्त्वयं भुक्तवानिति सर्वे परिहसन्तीति व्रीला पुनःपुनर्महतीं धनायां वित्ताशां धत्ते निद्रासुखं न लभते अतस्संप्रति राजराजः यक्षेशः महतां निधीनां रक्षापिशाच इववर्तते ॥ ५० ॥

तृष्णा—अ० अंउत्ततुए अथ्यपुरुसयसद्धासंठाविअहिअएतेल्लोक्कविवे-अपरिगहिअस्सपुरुसस्सका उणदसा

लोभः—प्रिये विमर्शनीयमेतत् तस्यपुनस्समाधिकौतुकंप्रशमयितुं महाराजेनमहामोहेनसमादिष्टौकामक्रोधौमदागमनकांक्षिणौतिष्ठतः इमौ तावदुपसर्पावः (उपसृत्य) लोभनामाहमभिवादयेज्यायांसौकामक्रोधौ

तृष्णा—सोह्मएसा पणमइगुरुअण (इति उभौ प्रणमतः)।

कामक्रोधौ—दीर्घायुषौ भूयास्तां ।

वसन्तः—अहो निदाघपवनदवाग्नीनामिवभवतांसमागमः किन्नसेत्स्यतिराज्ञो महामोहस्य माभूद्विवेकतोभवत्पत्नीनांरतिजिघांसातृष्णानां माङ्गल्यभूषणवैकल्यं (सर्वेपरस्परमाश्लिष्यन्ति)।

कामः—अपिस्वागतमस्मदुपजीव्यमर्थपुरुषार्थमभिरक्षतेलोभाय ।

लोभः—अथकिं अनुग्रहपदं खल्वहंभवतां ।

क्रोधः—अपिकथममोघ वृत्तिरपवर्गादन्तवैदेशिकस्त्वमवधत्से स्वामिकृत्यं ।

लोभः—युष्मदवष्टम्भेन सर्वत्रामोघवृत्तिरस्मिपश्यसुयोधनादिवन्मत्परिगृहीतस्यकोऽस्येदानीमद्वितीयां द्वितीयपुरुषार्थनिष्ठां ।

**क्षुद्रक्षोणिरजः कणास्थिरतृषः क्षुभ्यन्तिपृथ्वीभृत**
**स्तप्येतस्यपदायकः क्वचिदिति त्रस्यन्त्यमर्त्येश्वराः ।**

---

आर्यपुत्र त्वया अर्थपुरुषार्थश्रद्धासंस्थापितहृदये त्रैलोक्येविवेकपरिगृहीतस्य पुरुषस्य कापुनर्दशा

सुषैवा प्रणमतिगुरुजनं ।

---

अर्थरूपे पुरुषार्थे या श्रद्धा तस्यां संस्थापितं हृदयं यस्य तस्मिन् ।
एतत् त्वदुक्तं विमर्शनीयं चिन्तनीयं । तस्य पुरुषस्य समाधौ कौतुकं प्रशमयितमदागमने प्रतिष्ठा ययोः स्तौ । ज्यायासौ कामक्रोधलोभानां क्रमेण ।
सुषैवाप्रणमति गुरुजनं उभयतः कामसमीपे क्रोधसमीपे च ।
दीर्घमायुर्ययोस्तौ दीर्घायुषौ ।
निदाघः ग्रीष्मः पवनः वातः दवाग्निः वनवह्निः तेषामिव त्रयाणां भवतां समवायः । महामोहस्य राज्ञः किंचसेत्स्यति सर्वं सेत्स्यत्येवेत्यर्थः । मङ्गल्यानां मङ्गलानां भूषणानां हानिर्माभूत् । कामस्य रतिः क्रोधस्य जिघांसालोभस्य तृष्णेति विवेकः ।

भिक्षाकेष्वपिकेषुचित्क्वचिदुपक्षिप्तेष्वधिक्षेपतः
पक्षेदुर्मतिभृत्ययोरिहजगत्तिष्ठत्यसूयेर्ष्ययोः ॥ ५१ ॥

अपि च

अटन्तिहरितोदशस्थपुटयन्तिविश्वम्भरां
पठन्तिधनिनाञ्चटून्परपरिच्छदंबिभ्रति ।
तरन्तिजलधिंप्लवैस्समरमारभन्तेमुधा
दुरन्तधनदोहलग्रहिलचेतसोदेहिनः ॥ ५२ ॥

वसन्तः—आयुष्मन्महामोहामात्यधुरीण पुनस्तृष्णासहायस्यतेपूर्वा परपुरुषार्थसाधकेस्वयञ्चसर्वचित्तसाक्षिकंस्वादुतयोपलभ्यमाने सर्वराजन्य सेवनीयचरमोपवेदसिद्धप्रत्यक्षपुरुषार्थेकः प्रत्यूहः

---

अस्मदुपजीव्यं अस्माकमुपजीव्यं ।

अथ किमित्यंगीकारे । अत्र हेतुमाह अनुग्रहेति–।

अपवर्गोदन्तस्य मोक्षवृत्तान्तस्य वैदेशिक अनभिज्ञ इत्यर्थः। एवं भूतस्त्वं स्वामिन महामोहस्य कृत्यं कथमवधसे ।

युष्माकमवष्टंभेन अवलंबनेन सर्वत्रामोघवृत्तिः सफलयत्नोस्मि ।

दुर्योधनादिवत् दुर्योधनादीनामिव–तामेव विशदयन्ति ।

क्षुद्रेति–॥ पृथ्वीभूतः राजानः क्षुद्रे क्षोणीरजः कणे भूरेणुलेशे स्थिरतृषः गाढस्पृहास्सन्तः क्षुभ्यन्ति क्षुब्धाभवन्ति अमर्त्येश्वराः ब्रह्मादयः स्वपदाय स्वाधिकाराय क्वचित्प्रद्वेशे कःकोवा तप्येत तपःकुर्यादितिवस्यन्ति बिभ्यन्ति। केषुभिक्षाकेषु याचकेष्वपि केषुचित् क्वचित् प्रयोजने उपक्षिप्तेषु समीपमानीतेषु सत्सु अधिक्षेपत अन्येषां निन्दनात् दुर्मतिभृत्ययोः असूयेर्ष्ययोः पक्षे जगत्तिष्ठति ॥ ५१ ॥

अन्यदप्याह

अटन्तीति–॥ दशहरितः दिशः अटन्ति सञ्चरन्ति विश्वम्भराः भूमिंस्थपुटयन्ति धनलिप्सया खननेन विपुलां कुर्वन्ति धनिनां पुरश्चाटून चाटूनि पठन्ति परेषां परिच्छदं उपकरणं बिभ्रति वहन्ति प्लवैः जलधिं तरन्ति समरं संग्राममारभन्ते दुरन्तेन धनदोहलेन धनाभिलाषेन ग्रहिलं ग्रहणशीलं चेतो येषां ते तथा देहिनः एवमेवं कुर्वन्ति ॥ ५२ ॥

अपञ्च

कालप्राप्ताद्धर्मतोधर्मतोवा
कर्त्तोकार्यः कामतन्त्रप्रधानैः ।
लाभेगुप्तावप्रदानव्रतेवा
त्वय्यायत्तोह्यर्थनामापुमर्थः ॥ ५३ ॥

एवन्तुसर्वेभवन्तोमामकमनुयोगं विवेककवचदुर्भेदविज्ञानोविपश्चित्तमः कथङ्कारमवस्कन्दनीयः ।

कामः—सखे एवमहमेतदध्यवस्यामि अहन्तावदग्रेसरोगच्छामि भवद्भिस्तुपक्षद्वयं पार्ष्णिं च परिपालयद्भिरन्तरानिवेश्यतृष्णामनुप्लवैर्भवितव्यं तदनेनदुर्भेदेन व्यूहेनविवेकस्य स्वकुलविध्वंसनमनोरथप्रत्यूहीभविष्यामः इति (तथा व्यूह्यसर्वेपञ्चषाणिपदानिपरिक्रामन्ति)

कामः—(सरभसपुंखितशरं पौष्पं धनुरान्दोलयन्) पश्यततावदिदानीमधिज्यधन्वनोमे ललितघोराणामिषूणां लक्ष्यलाभं ।

---

महामोहामात्यानां धुरीणाः अग्रेसराः पूर्वापरयोः धर्मकामयोः पुरुषार्थयोः वाधके सर्वेषां चित्तं साचियस्मिन्कर्मणि तत्तथा स्वादुतया भोग्यतयोपलभ्यमाने ज्ञायमाने सर्वैः राजन्यैः सेवनीयेन चरमेण उपवेदेन अर्थशास्त्रेण सिद्धे ।

आयुर्वेदो धनुर्वेदो वेदोगान्धर्व एव च ।
अर्थशास्त्रं परं तस्मात् विद्याह्यष्टादशस्मृताः ॥ इत्यत्र,

अर्थशास्त्रस्य चरमोपवेदत्व ज्ञायते । प्रत्यक्षपुरुषार्थे अर्थरूपे कः प्रत्यूहः विघ्नकोपीत्यर्थः ।

कालेति—॥ कामतन्त्रं कामशास्त्रं प्रधानं येषां तैः काले तत्तत्समये प्राप्ताधर्मत अधर्मतो वा कर्त्तोकार्यः अङ्गीकार्यः अर्थनामा पुमर्थः लाभे गुप्तौ अप्रदानरूपे व्रतेच त्वय्यायत्तः ॥ ५३ ॥

अनुयोगं प्रश्नं । तमेवाह विवेकेति—।

विवेक एव कवचः तेन दुर्भेदं विज्ञानं यस्य स तथा विपश्चित्तमः पुरुषः कथंकारमवस्कन्दनीयः पीड्यः ।

कामः स्वमतमाह 'सखेति—। पक्षद्वयं पार्ष्णिद्वयं पृष्ठभागं च पालयद्भिः

प्रणिधानविशेषभावितात्मा
करणग्रामनिरोधनिष्प्रकम्पः ।
निभृतश्वसनोनिवृत्तिधर्मा
पुरुषस्त्यक्तपरिग्रहोयमास्ते ॥ ५४ ॥

वसन्तः—सूक्ष्ममवलोक्य हन्तावहितैरस्माभिर्भवितव्यं अत्र हि

वितमसिपदे विधास्य
न्मायाजलधेस्समुद्धृतं पुरुषं ।
विमृशतिकिमपिरहस्यं
सुमतिसहायो विवेकएकान्ते ॥ ५५ ॥

तृष्णामन्तरा मध्ये निवेश्य अनुसृत्वैः भवितव्ये दुर्भेदव्यूहेन स्वकुलध्वंसिनो मनोरथस्य प्रत्यूही भविष्यामः ।

पञ्चवापङ्क्त्या पञ्चपाणि ।

सरभसं सवेगं यथा भवति तथा पुंखिताः ज्यामारोपिताः शराः यस्मिन् तत् अधिज्यमारोपितमौर्वीकं धनुर्यस्य सोऽधिज्यधन्वा तस्य ललितानां घोराणां । पुष्पत्वाल्ललितत्वे बाधकत्वेन घोरत्वं लक्ष्यस्य शरव्यस्यलाभं तल्लक्ष्यमित्यत आह--

प्रणिधानेति-॥ प्रणिधानविशेषेण योगविशेषेण भावितः ध्यातः आत्मा परमात्मा यस्य स तथा करणानां मिन्द्रियाणांग्रामस्य समूहस्य निरोधेन प्रत्याहारेण निष्प्रकम्पः निभृतः नियतः श्वसनः प्राणानिलो येन स तथा निवृत्तिधर्मः निवृत्तिरेव धर्मो यस्य स तथा त्यक्ताः परिग्रहाः येन स तथा अयं पुरुषः आस्ते ॥ ५४ ॥

अवहितैः सावधानैः । कुत इत्यत आध अत्रहीति-॥

वितमसीति-॥ मायाप्रकृतिः सैवजलधिः तस्मात्समुत्थितं पुरुषं वितमसि रजस्तमोभ्यांमस्पृष्ठे पदे स्थाने । तमसस्तु पारे तमसः परस्तात् क्षयंतमस्य रजसः पराके इत्यादेश्रुतिभ्यो रजस्तमसोः पारे यत्प्रतिपन्नं तस्मिन्पदे वैकुण्ठाख्ये विधास्यन् स्थापयिष्यन् विवेकः एकान्ते सुमतिसहायस्सन् किमपि रहस्यं विमृषति ॥ ५५ ॥

रोषाधिक्येन भ्रूभङ्गः तेन सहितं यथाभवति तथा । विवेकेन किंचित्प्रयोजनमितिभावः । कथंनातिवर्त्तंत इत्यत्राह=।

क्रोधः-( सभ्रुकुटीभङ्गं ) भोवसन्त विमृश्यतांकिमपिदुरात्मनाविवेकेन पुरुषस्तावत्पुरस्कृतमन्मथानामस्माकमभिमतन्नातिवर्तते यतः

अनघसमाधिसम्पदुदरंभरिरात्मभवः
प्रबलमहोर्मिजाल भरितेदुरिताम्बुनिधौ ।
जडमतिजन्तुजातमुपजातविहारमसौ
सुखबडिशावकृष्टमुपदंशदशान्नयति ॥ ५६ ॥

पश्यतुभवानेतस्यपुरुषस्यभावनाविशेषं

स्वसंबोधस्सौधश्शुभगुणगणोमण्डनविधि
स्समाधिस्सम्भोगोरहसिजपशीलीरतिकथा ।
सुषुप्तेलोकेद्यश्रुतिपरिषदन्तः पुरगतो
मुनिः शान्तिव्याजान्मुखरयतिश्रृङ्गारनिगमं॥५७॥

वसन्तः-(स्वगतं) आशामात्रकृतेयमन्यथाकल्पना (प्रकाशं) सखे प्रबलप्रतिपक्षसन्निधौ किमनेनप्रगल्भभाषितेन

---

अनघेति-॥ अनघया समाधिसम्पदा उदरम्भरिः उदरपोषक आत्मभवव मदनः प्रबलाः प्रकृष्टबलाश्च महान्तः ऊर्मयः अशनाया पिपासे शोकमोहौ चेति षट् त एव ऊर्मयः मरीचयः तेषां जालैः भरिते पूर्णे दुरितान्येवाम्बुनिधिः तस्मिन्सुखमेव बलिशं तेनापकृष्टं तेषां जातं समूहं उपजातो विहारो यस्मिन्कर्मणितद्यथा भवति तथा उपदंशस्यव्यंजनस्य दशां नयति कामस्य समाधिसंपदशनं जडमतिजन्तुजातं उपदंशः ॥ ५६ ॥

भावना विशेषः समाधिविशेषः । विशेषशब्देन वैलक्षण्ये द्योत्यते । तदेवाह=

स्वेति-॥ स्वस्य संबोधः ज्ञानमेवसौधं शुभानां गुणानां शमदमादीनां गण एवमण्डनविधिः अलंकारं विधीयत इति विधिः समाधिरेव संभोगः सुखानुभवः रहसि जपशीली जपस्स्वभाव एव रतिकथा रतिविषयः प्रसङ्गः अद्यालोके सुषुप्ते सति स्वस्स्वरूप परस्स्वरूपाद्यनभिज्ञेसति अत्र ।

यानिशासर्वभूतानां तस्यांजागर्ति संयमी त्येतदनुसन्धेयं । श्रुतिपरिषदेव अन्तःपुरं तद्गतः मुनिर्योगी शान्तिव्याजात् शृङ्गारनिगमं शृङ्गारशास्त्र मुखरयतिःपठति ॥ ५७ ॥

लोभः—सखेवसन्तप्रियातावन्ममैषाप्रतिपक्षप्रतिक्षेपभीता प्रत्याश्वास यितव्या (तृष्णामवलोक्य) सुमुखितृष्णेमहावीरव्यूहमध्यगता महत्यपिप्रतिपक्षेमाभैषीः ।

तृष्णा—सअलसुरासुरमहिअमाहप्पेसु तुह्मेसुजीवंतेसुणिच्चंणिब्भअम्मि

कामः—(सान्तस्त्रासं) परिवृत्यावलोक्यपश्चात्पदानिप्रतिक्षेप्यन्तात्र दस्माभिः

अद्यहि

अनिद्राणप्रज्ञासहजबलधीराद्भुतगति
स्तितिक्षासन्तोषस्थिरतरतनुत्राणघटितः ।
प्रयुक्तंकेनापिप्रणवरथमास्थायपुरतो
विवेकः प्रत्युद्यन्विघटयतिमे व्यूहघटनां ॥ ५८ ॥

---

सकलसुरासुरमहितमाहात्म्येषुयुष्मासुजीवत्सुनित्यंनिर्भयास्मि

---

इयं समाधेरन्यथा कमुना आशामात्र कृतानतु वास्तवी इयं नकार्येहेतुरित्याह नखल्विति—।

मनोरथसंपादितया चतुरङ्गसंपत्या महाराज्य सिद्धिः नखलु प्रबलस्य प्रति पक्षस्य सन्निधौ प्रगल्भभावितेन समर्थोचितभाषितेन किंसिद्ध्यति ।

प्रतिपक्षस्य उपक्षेपेणप्रसंगेन भीता प्रत्याश्वासयितव्या भयापनोदनेन स्थिराकर्त्तव्या । महावीराणां व्यूहस्य मध्यगता प्रतिपक्षेमहत्यपि माभैषीः ।

सकलैः सुरासुरैः महितं पूजितं माहात्म्यं येषां तेषु । अन्तर्मनसि त्रासेन सहितं यथाभवतितथा । परिवृत्य निवृत्य पश्चात्पृष्टतः प्रक्षिप्यन्तां निधीयन्तां कुत एतदित्यत आह अद्यहीति—॥

अनिद्राणेति—॥ अनिद्राणायाः प्रज्ञायाः सहजेन स्वभावेन बलेन धीरा॰ निश्चला अद्भुता आश्चर्यभूता च गतिर्वृत्तिर्यस्य सतथा तितिक्षासन्तोषस्य तावेव स्थिरतरं तनुत्राणं कवचं तेनघटितः संबद्धः केनापिप्रयुक्तं प्रणवरथं प्रणवमेवरथं आस्थायप्रत्युद्यन् प्रत्युत्थानंकुर्वन् मे व्यूहघटनां व्यूहरचनां विघटयति विदलयति ॥५८॥

भयं नाटयन्ति अभिनयन्ति ।

सर्वे भयन्नाटयन्ति

वसन्तः–युष्मासुत्रिषुकस्यचिद्यदिविपत्संपत्स्यतेकेनचित

त्यद्यत्येवहिभक्तजीवितनयामोहस्स्वयं जीवितं

सद्यश्चैनमनुम्रियेतनियतन्तद्वल्लभादुर्मतिस्त-

त्संप्रत्यपसर्पणंक्षममितः क्षिप्रं–

विवेकास्पदात् ॥ ५८ ॥

लोभः–अराजकैरस्माभिरत्रनयोद्धव्यं मन्त्रयिष्यतित्वराजास्वयमेव कृत्यशेषं

क्रोधः–(सनिर्वेदं) धिग्धिक्किमियताकालेनास्माभिराचरितंराजकृत्यं

लोभः–सखे

अतिक्रामन्कालस्तपनरथवेगेनमहता

नरोद्धुं शक्येतप्रतिवहनवातूलरहितः ।

---

युष्मांस्त्विति–॥ त्रिषयुष्मासु कस्यचिदेकस्य विपत् मतिः केन चिद्धेतुना संपत्स्यतेर्भविष्यति यदिमोहः भक्तजीविततयाभक्तः जीवितं यस्य सः भक्तजीवितः तस्यभावः तत्तातया स्वयं जीवितं त्यजत्येवहि प्रसिद्धौ तद्वल्लभा दुर्मतिः एनंमोहं सद्यःसहसा अनुम्रियेत अनुमृता स्यात् तत् तस्माद्धेतोः इतः विवेकास्पदात् क्षिप्रमपसर्पणं संप्रतिक्षमं युक्तं अस्मिन् युद्धे अस्मासु यस्यकस्यचित्पराजयेपि मोहो दुर्मतिश्च मरिष्यतः एवं स्वामिनाशहेतोर्युद्धादपि अपसर्पणमेवास्माकंयुक्तमितिभावः ॥ ५८ ॥

हेत्वन्तरमाह आराजकैरिति–॥ नविद्यते राजा येषां तैः अस्माभिर्न योद्धव्यं एवंसति स्वामिकार्यं कथं सेत्स्यतीत्यताह मन्त्रयिष्यतीति–।

कृतस्य कार्यस्यशेषं ।

धिग्धिगिति खेदोक्तिः । इयता कालेन अस्माभिः किं राजकृत्यमाचरितं न किंचिदितिभावः ।

किमाचरितमस्योत्तरमाह–

अतिक्रामन्निति–॥ महता तपनरथस्य; वेगेन अतिक्रामन् गच्छन् कालः

गतस्रोतोरोधे न खलु यतितव्यं कृतधिया
तदारम्भः श्रेयानुपरितनभीतिप्रतिभटः ॥ ६० ॥

तदद्यायुस्तावदस्माभिरभिरक्षणीयं सर्वत एवात्मानङ्गोपायेदिति हि श्रूयते ।

कामः—समयोचितमिदं समर्थ्यते लोकवृत्तवेदिना लोभेन ।

आदेयो न हि सौप्तिकप्रणिहितैरस्माभिराकस्मिकः
पातः क्षुद्रविवेकलक्षणमहापातालगर्तोदरे ।
सद्यस्संप्रति डम्भदर्पकुहनासूयादिदत्तेक्षणः
प्रत्यर्थिप्रतिरोधकर्मणि महामोहः प्रवर्तिष्यते ॥ ६१ ॥

---

प्रतिवहनः संमुखमागत्यनिवर्त्तकः सचासौ वातूलश्च तेन रहितः कालः नरोद्धुं शक्येत गन्तव्यमिति वारयितुं शक्यते किं नशक्यत इत्यर्थः । अथ किंकर्तव्यमित्यत आह गतेति—। कृतधिया शिक्षितबुद्धिना जनेन गतस्य स्रोतसः प्रवाहस्य रोधे निरोधे यतितव्यं नखलु गतस्य स्रोतसः निरोधासंभवात् तत् तस्मात्कारणात् उपरितनायाः अप्रस्थिताः भीतेः प्रतिभटः प्रतिबन्धकः आरम्भः उद्योगः श्रेयान् श्रेष्ठः स एव कर्तव्यइत्यर्थः ॥ ६० ॥

तत् तस्मात् हेतोः अस्माभिरायुरभिरक्षणीयम् । आत्मानं शरीरं सर्वस्मात् भय स्थानात् गोपायेत् रक्षेदिति श्रुतिवचश्श्रूयते हि ।

लोकवृत्तान्तं वेत्तीति लोकवृत्तान्तवेदी तेन समयस्य कालस्योचितमिदं समर्थ्यते प्रतिपाद्यते । अतएवमेव वक्तव्यमित्याह-

**आदेय इति—॥** सौप्तिके प्रणिहितैर स्माभिः क्षुद्रो यो विवेकः तल्लक्षणस्य तद्रूपस्य महतः पातालस्य गर्तोदरे श्वभ्रान्तः आकस्मिकः निर्हेतुकः पातः पतनं अस्माभिः आदेयः आदातुं योग्यः न हि । राजकृत्यसिद्धिः कथमित्याह सद्य इति— सम्प्रति प्रत्यर्थिनां प्रतिरोधकर्मणि निवारणकृत्ये डम्भदर्पकुहनासूयादिषु दत्तेक्षणः दत्तदृष्टिः महामोहः सद्यः प्रवर्तिष्यते प्रवृत्तो भविष्यति ॥ ६१ ॥

तद्वयमिदानीं भिन्नदिक्काः प्रतिष्ठेमहि आत्मार्थे पृथिवीं त्यजेदि तिहि वदन्तीति निष्क्रान्तास्सर्वे—

इतिकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्तचार्यस्य कृतिषु सङ्कल्पसूर्योदये कामादिव्यूहभेदो नाम चतुर्थोऽङ्कः ।

श्रीमते भाष्यकाराय महादेशिकायनमः ।
श्रीमते निगमान्तमहादेशिकायनमः ॥



तत्तस्माद्धेतोः भिन्नदिक्काः भिन्नाः प्रतिनियताः दिशः येषां ते तथा प्रतिष्ठामहे प्रस्थास्यामहे । प्रस्थाने हेत्वन्तरमाह आत्मार्थइति वदन्ति मुनय इति शेषः ।

ॐ श्रीरस्तु ।

श्रीमते हयग्रीवायनमः ।

श्रीमते निगमान्तगुरवेनमः ॥

# सङ्कल्पसूर्योदये पञ्चमोऽङ्कः ।



ततः प्रविशति डम्भः कुहना च,

डम्भः—अहहारे त्वां धर्मपत्नि कुहने संबोधयामि । त्वं हि मे तारेव बृहस्पतेरहल्येव गौतमस्यास्पृष्टपुरुषान्तरा त्वर्णावरहाचमा सहधर्मचारिणी ।

कुहना*—जं बह्मणेसरो भणाद, तह विलज्जामि णिद्दिट्ठादो णिदंसणादो । अरुंधदि विद वसिट्ठस्सेति वअणिज्जं घरसामिणा । जाहे अहं तक्करेहिं किदवेहिं गामणीहिं णरिंदामच्चेहिं पासंडेहिं अण्णेहिं वि तारिसेहिं पत्थिदह्मि ताहेवि ता तुमं एव्व सुमरिऊण सेवामि ।

---

* यद्ब्राह्मणेश्वरो भणति, तथापि लज्जामि निर्दिष्टान्निदर्शनात् । अरुन्धतीव वसिष्ठस्येति वचनीयं गृहस्वामिना । यदाहं तस्करैः कितवैर्ग्रामणीभिर्नरेन्द्रामात्यैः पाषण्डैरन्यैरपि तादृशैः प्रार्थितास्मि तदापि तान् त्वामेव स्मृत्वा सेवे ।

अत्रापि पूर्वाङ्कदर्शितैरेव डंभाद्यैः महामोहस्य विमतभङ्गप्रयतनवर्णनादङ्कास्यमेवार्थोपक्षेपकम् । कुहना डम्भस्य पत्नी । अरेइति सम्बोधनसूचनम् । हे भो इतिवत् । अस्पृष्टं पुरुषान्तरं अन्यपुरुषो यया तया मे सहधर्मचारिण्या त्वां सम्बोधयामि । अस्पृष्टं पुरुषान्तरं अन्यपुरुषो यया तया मे सहधर्मचारिणी हि ।

यत् ब्राह्मणेश्वरो भणति तत्सत्यमिति शेषः । तस्करादीनां कुहनासम्बन्धः कादाचित्कः, डम्भस्य तु नित्यइति भावः ।

डम्भः—सान्तर्हासं, अत एव सर्वलोकपतिव्रता खल्वसि अद्य पुनरनुगतानपि मे गार्हपत्यादीन् यतःकुतश्चनानीतैरपि शुष्मभिस्समादधानया यज्ञपत्न्या त्वया नकदाचिदपि मामकमग्निहोत्रं विच्छिद्यते पर्वकालेषु चानाविष्कृतपुष्पया त्वया दर्शपूर्णमासौ च नित्यमनुवर्त्यते। निर्वर्त्यते च पिण्डपितृयज्ञादिकम्। का कथा प्रायश्चित्तस्य।

कुहना *—संतं पाश्रं संतं पाश्रं। जाश्रंमि खु विच्छेए समाहाणिज्जं णखु काहेपि अह्म घरे अग्गीणं विच्छेओ पसणाहिं खु कुलदेवआहिं णिच्चं रक्खिज्जन्ति अह्माणं अग्गिणो। तह उप्पण्णं खु पुप्फं अणाविक्करणिज्जं पत्तोवि अ पव्वसु ताहिं एव्व कुलदेवआहिं विलम्बीअदि पुप्फसमओ।

डम्भः—साधु कुहने साधु, अस्मत्सहधर्मचारिणी खल्वसि। बहु मन्ये त्वाम् ब्राह्मण्यप्रतिष्ठापिकां यज्ञपत्नीं परमश्रोत्रियधर्मपत्नीम्। नित्यमेव खल्वशनायोदन्याभ्यामातुरस्य मे हरिवासरेषु मृष्टमपि भोजनमनाविष्कुर्वाणया त्वया प्राप्यते द्वादशीव्रतम् प्रख्याप्यते च प्रतिगृहं साधनसंपत्तिश्चमेण।

* शांतं पापं शांतं पापं जाते खलु विच्छेदे समाधानीयम्। न खलु कदाप्यस्मद्गृहे ऽग्नीनां विच्छेदः। प्रसन्नाभिः खलु कुलदेवताभिर्नित्यं रक्ष्यन्तेऽस्माकमग्नयः। तथा उत्पन्नं खलुपुष्पमनाविष्करणीयं प्राप्तेऽपि च पर्वसु ताभिरेव कुलदेवताभिर्विलम्ब्यते पुष्पसमयः।

सर्वलोकपतिव्रता सर्वेषु लोकेषु पतिव्रतात्वेन प्रसिद्धा सर्वलोकपतिषु व्रतवती च अनुगतान् शान्तानपि शुष्मभिः अग्निभिः समादधानया अनाविष्कृतं अप्रकाशितं पुष्पं रजः यया तथा ज्ञातमप्यार्तवमनाविष्कुर्वाणया त्वयेत्यर्थः। एवं तेषुतेष्वेव कालेषु सर्वकर्मणां निवर्तनात् प्रायश्चित्तकथैव नास्ति।

शान्तं पापं। यतः कुतश्चनानीतैरपि शुष्मभिः समादधानयेति तेनोक्तम्। तदलीकवचनश्रवणजनितं पापम् शान्तमित्यभिप्रायः अस्याः पुष्पसमय इत्यन्तमाकर्ण्य डम्भस्तां श्लाघते साध्वित्यादि।

किन्तु किञ्चित् रहस्यमुपदिशामि। सन्तीदानीमन्तिमयुगभूमिकाभेदा इव केचिदवधीरितसकलधर्माः प्रव्राजितवेषभाजः प्रकटितमायाविलासाः पूर्वदेवाः। ते च रावणधनंजयन्यायेन भवतीं जिघृक्षेयुः, अतो मत्समीपं कदाचिदपि नातिवर्तेथाः। न च परमब्राह्मणं मां मुहूर्तमपि त्वदन्याः परिचरितुमर्हन्ति। अहं पुनरधुना दिव्यादिव्यसर्वभोगसार्वभौमस्य राज्ञो महामोहस्यानुचितमाचरन्तमाततायिनं विवेकमभिचरितुं देव्या दुर्मत्या प्रार्थितोऽस्मि, यथा वत्स दम्भ विश्वधर्मोपप्लावकेन त्वया विवेकः प्रध्वंसनीय इति। ततश्चाहं नित्यनिस्पृहोऽपि दाक्षिण्यपरवशतया "षट्स्वनभिचरत्पते"-दिति महर्षिभाषितं चानुवर्तमानः कामप्यलक्ष्यां देवतामाराराधयिषुरास्थितनियमोऽस्मि। तन्मे दिव्यगङ्गाजलाप्लुतलोकपालपुरोहितोपनीतानि पारिजातपुष्पफलान्युपाहर।

ब्राह्मण्यस्य प्रतिष्ठापिकां परमस्य श्रोत्रियस्य पत्नीं परम् अश्रोत्रियपत्नीं इति च नित्यमेव अशनायोदन्याभ्यां क्षुत्तृड्भ्यामातुरस्य अनाविष्कुर्वाणया मया नदत्तमिति वदन्त्या अन्तिमयुगस्य कलियुगस्य भूमिकाभेदा वर्णिकाभेदा अवधीरिताः सकलाः धर्माः वेदोक्तधर्माः प्रव्राजितानां सन्यासिनां वेषभाजः प्रकटिताः प्रकाशिताः मायायाः वञ्चनायाः विलासाः यैस्ते तथा पूर्वदेवाः असुराः रावणो यथा भिक्षुरूपो सीतां जहार, धनञ्जयो यथा सन्यासिरूपमास्थाय सुभद्रामुपयेमे तन्न्यायेनेत्यर्थः। परममुत्तमं ब्राह्मणं परम्अब्राह्मणमिति च। त्वदन्ये त्वत्त इतरे मां परिचरितुं नार्हन्ति। अतः कदाचिदपि नातिवर्तेथाः। स्वचिकीर्षितमाह अहं पुनरिति। दिव्याश्चादिव्याश्च ये सर्वे भोगाः तेषां सार्वभौमस्य विश्वेषां धर्माणामुपप्लावकेन नाशकेन दाक्षिण्यपरवशतया दाक्षिण्याधीनतया षट्सु आततायिषु अग्निदोगरदश्चेत्यारभ्य षडेते आततायिन इत्युक्तेषु अनभिचरन् अभिचारमकुर्वन् अलक्ष्यामप्रत्यक्षामाराराधयिषुः आराधयितु मिच्छुः दिव्यगङ्गायाः मन्दाकिन्याः जले आप्लुताः स्नाताः ये लोकपालानां पुरोहिताः तैरुपनीतानि पारिजातपुष्पादीनि आदिशब्देन पल्लवसलिलादि गृह्यते॥

कुहना *—हध्धि हध्धि सअलाअमसारगहणविसारओ विवेओ समअमप्पमुहेहिं अमच्चअणेहिं संरखिओ कहं अभिअरिज्जइ । तारिसेसु पउत्तो अभिआरो कत्तुणो एव्व बाहं आवहइत्ति सुणीअइ ।

दम्भः—अयि मुग्धब्राह्मणि अविचारितास्मद्वैभवा किं भाषसे ।

विद्याश्चतुष्कसहिता विदिता द्विसप्त
त्रिप्रं चतुर्गुणितचन्द्रकलाः कलाश्च ।
काले च साधुविहिताः क्रतवस्सहस्रं
धर्मध्वजाश्च भुवनेषु मया निबद्धाः ॥ १ ॥

अयि परमधार्मिक सहधर्मचारिणि आस्तामिदं तावद्विद्याचार माहात्म्यं निस्पृहत्वमपि निपुणमवधारय ।

* हा धिक् हा धिक् । सकलागमसारग्रहणविशारदो विवेकः शमदमप्रमुखै रमात्यजनैस्संरक्षितः कथमभिचर्यते तादृशेषु प्रयुक्तोभिचारः कर्तुरेव बाधामावहतीति श्रूयते ।

कर्तुरेव बाधामावहतीति श्रूयते । श्रुतिश्च "प्रत्यगेनमभिचारस्तृणुते" इति । मुग्धब्राह्मणि मूढब्राह्मणि । अविचारितमस्माकं वैभवं यया सा तथा ।

विद्येति–॥ चतुष्कं विद्यानां चतुष्टयं तेन सहिताः द्विसप्त चतुर्दश विद्या मया विदिताः । चतुर्दशविद्याः

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥

इत्युक्ताः । विद्याचतुष्कं तु

आयुर्वेदो धनुर्वेदो वेदो गान्धर्व एव च ।
अर्थशास्त्रं परं तस्मादित्युक्तम् ।

अतो विद्या अष्टादश चतुर्गुणितचन्द्रकलाः षोडशतच्च चतुर्गुणिताश्चेत् चतुष्षष्टिर्भवन्ति । ताश्च मयाविदिताः काले शास्त्रोक्तकाले धर्मध्वजः अयं धार्मिक इति धर्मसूचकोध्वजश्च निबद्धः ॥ १ ॥

निर्जित्य क्षितिमण्डलं भृगुपतिर्मह्यं प्रदातुं पुनः
प्रह्वः प्रार्थयत न्यषेधि च मया विश्वं तृणीकुर्वता ।
अस्मद्वैभवदृष्टिसंभृतचमत्कारैरमर्त्येश्वरैः
दत्तौ धिक्कृतवानहं शमधनः स्वर्गापवर्गावपि ॥ २॥

कुहना*—सविमर्शं एवं णाम महप्पहावाणं तुह्माणं विवेआहिआरो किं सेणो अण्णारिसो वा जोवि कोवि जत्थ, अहं सह-धम्मआरिणी होम्मि ।

दम्भः—अयि महाश्रोत्रियधर्मपत्नि महानुभावानामस्मदन्तेवासिनामत्यन्तरहस्यमिदमावेदयामि । सर्वेभ्यस्तृष्णादिभ्योऽपि नैतद् ब्रूयाः । न खलु श्येनादिवद्विशेषतो विहितोऽयमभिचारः ।

किन्तु

ये तु धर्मतयाधीतास्ते सर्वे मत्परिग्रहात् ।
अविशेषेण गच्छन्ति विवेकस्याभिचारताम् ॥ ३ ॥

* एवं नाम महाप्रभावाणां युष्माकं विवेकाभिचारः किं श्येनः अन्यादृशो वा योऽपि कोऽपि यत्राहं सहधर्मचारिणी भवामि ।

विद्याचारमाहात्म्यं विद्यया महात्म्यं आचारेण माहात्म्यं च । निस्पृहत्वमाह

निर्जित्येति—॥ भृगुपतिः जामदग्न्यः क्षितिमण्डलं निर्जित्य पुनर्मह्यं प्रदातुं प्रह्वस्सन् प्रार्थयत विश्वं तृणीकुर्वता मया न्यषेधि च । अस्माकं वैभवस्य दृष्ट्या संभृतः संपादितः चमत्कारो येषां तैः अमर्त्येश्वरैः ब्रह्मविष्णुरुद्रैः दत्तौ स्वर्गापवर्गावपि शमः शान्तिर्धनं यस्य स तथा अहं धिक्कृतवान् निरस्तवान् ॥ २ ॥

महान् अनुभावः उत्कर्षः येषां तेषामस्माकं अन्तेवासिनां शिष्याणामपि अत्यन्तरहस्यम् । श्येनादिवत् आदिशब्दः सर्पादीनां ग्राहकः । विशेषतः विशेषेण श्येनः सर्प इत्यादिवच्च विहितोऽयमभिचारः ।

किन्त्विति तेभ्यो विशेषं द्योतयति ।

ये त्विति—॥ धर्मतया प्रवृत्तिधर्मतया निवृत्तिधर्मतया वा ये ऽधीताः शास्त्रेणेति शेषः । ते सर्वे मत्परिग्रहात् मया परिग्रहात् अविशेषेणायमभिचारः अयं तु नेति विशेषाभावेन विवेकस्याभिचारतां गच्छन्ति । प्रवृत्तिनिवृत्तिरूपाः सर्वेऽपि धर्माः दम्भायत्ताश्चेत् विवेकनाश इति भावः ॥ ३ ॥

कुहना*—सुठ्ठु चिन्तिअं को उण इमस्सि परपीडणजण्णे तुम्हाणं उवदेसं कुणज्ज ।

डम्भः—अहह अयि मुग्धे सर्वज्ञस्य मे किमन्येनोपदेष्ट्रा । सर्वेऽपि हि पण्डितंमन्या मामेवाश्रित्य संशयं प्रशमयन्ति । अथापि मयेदानीं साक्षिमात्रतया स्थापितः कश्चिदुत्कृष्टसर्वजनतिरस्कारको गर्वो नाम सर्वजनहृदयसंवादी महामोहसमयमहोपाध्यायः । तस्य चेदानीमागमनं प्रतीक्ष्यास्मिन् सिद्धाश्रमे नवकृत्वः पुण्याहपूते संभृतसंभारस्सप्तर्षिभिः प्रदिष्टां वृसीमधितिष्ठामि ।

कुहना†—जुत्तं आअरिअं कज्जसिद्धि अ तुम्ह करगआ होज्ज ।

डम्भः—निमित्तं सूचयन् अस्मत्कुलधर्मपालिनि कुहने स्पन्दते मम दक्षिणं चक्षुः । अद्यैव च सुहृत्समागमस्सम्पत्स्यते ( पुरस्तादवलोक्य ) कः खल्वसौ ज्वलत्प्रभाकञ्चुकितदुर्निरीक्षमूर्तिर्महात्मा मध्यमलोकमवतीर्यास्मदाश्रमाभिमुखमागच्छति ।

---

* सुष्ठु चिन्तितं कः पुनरस्मिन् परपीडनयज्ञे युष्माकमुपदेशं कुर्यात् ।
† युक्तमाचरितं कार्यसिद्धिश्च युष्माकं करगता भूयात् ।

---

अन्येनोपदेष्ट्रा किं नकिंचिदप्युपदेष्टव्यमित्यर्थः । तदेव विशदयति सर्वेपीति ॥ अथापि साक्षिमात्रतया साक्षाद्द्रष्टृमात्रत्वेन स्थापितः उत्कृष्टजनानां तिरस्कारकः अथमन्तास्सर्वेषां जनानां हृदयेन संवादो समानवादः सकलजनहृदयवेद्य इति यावत् । नवकृत्वः पुण्याहपूत इति शुध्यतिशयद्योतनम् । सप्तऋषिभिः प्रदिष्टां दत्तां वृसीनयनमपि तैरेव कार्यं नान्यैः इति व्यज्यते ।

अस्मिन्नवसरे गर्वस्समागतः । डम्भस्य दक्षिणनयनस्फुरणं जातम् । तदेवाह-निमित्तं शुभनिमित्तं सूचयन्निति अभिनयन्नित्यर्थः । स्पन्दते चलति अस्य किं फलमित्यत्राह-अद्यैवेति-॥ ज्वलन्त्या प्रभया कञ्चुकिता आवृता अत एव दुर्निरीक्षा निरीक्षितुं मशक्या मूर्तिर्यस्य स तथा । अस्माकमाश्रमस्याभिमुखं संमुखमागच्छति असौकः ।

ततः प्रविशति परिगृहीतपृथुलपादुकः प्रतिक्षणविक्षिप्यमाणविकटभुजदण्डो दृढतरदण्डावलम्बितप्रतिज्ञापत्रिकापताको दर्पः ।

दर्पः—अहं किल राज्ञा महामोहेन प्रकृष्टजनतिरस्काराय प्रणिहितः सकललोकतारतम्यदिदृक्षया परिक्रान्तः पितामहगृहान्मध्यमलोकमवतरन्नाचक्रवालमवलोकितदिशाचक्रवालः पुरन्दरपुरोगमैर्लोकपालैरभ्यर्चितस्सुरभिमदिरासुधाचन्द्रपारिजात मणिवरवितरणमहावदान्येन मन्दरमन्थमथनसंक्षोभसर्वंसहेन मधुकैटभमथनबन्धुना सिन्धुना समाहृतं हारोपहारमाबिभ्राणः प्रत्यागतोऽस्मि भारतं वर्षम् ।

अपि च ।

त्रयोदशमिवादित्यं रुद्राणां द्वादशं तथा ।
मन्वीत नियतं लोको वसूनां नवमं च माम् ॥४॥

( विचिन्त्य सरोषहासं ) अहो नु खलु जगतो मौढ्यं येषामस्मद-

परिगृहीते पृथुले पादुके येन स तथा । प्रतिक्षणं विक्षिप्यमाणौ धूयमानौ विकटौ दीर्घौ भुजदण्डौ येन स तथा । दृढतरे दण्डे अवलम्बिता प्रतिज्ञापत्रिका अहमेव पण्डितः नान्य इति प्रतिज्ञासूचिका पत्रिका सैव पताका यस्य स तथा स्ववैभवमाह अहं किलेति—॥ प्रकृष्टाः उत्कृष्टा ये जनाः तेषां तिरस्काराय प्रणिहितः प्रेरित इत्यर्थः तारतम्यं तरतमभावः तद्दिदृक्षया परिक्रान्तः सञ्चरन् पितामहगृहात् सत्यलोकात् मध्यमं लोकं भूलोकं आचक्रवालं चक्रवालाचलपर्यन्तमवलोकितं दिशानां चक्रवालं समूहो येन स तथा सुरभिः कामधेनुः मदिरा सुरा मणिवरः कौस्तुभः येषां वितरणेन विश्राणनेन महावदान्यः परमोदारः तेन मन्दरेण मन्दराचलेन यन्मथनं तेन संक्षोभः तस्य सर्वंसहेन मधुकैटभमथनो भगवान् तस्य बन्धुना श्वशुरेण सिन्धुना क्षीरार्णवेन समाहृतमानीतं हाररूपमुपहारमाबिभ्राणः ॥

त्रयोदशमिति—॥ मन्वीत जानीयात् आदित्यरुद्रवसुभ्योऽप्यधिकतरतेजोविशिष्टं मां दृष्ट्वा लोक एवमेव मन्वीत इति भावः ॥ ४ ॥

वक्ष्यमाणार्थप्रतिसंधानेन रोषहासौ ।

मौढ्यमेव विशदयति येषामिति—॥ अस्मदनुचराणां प्रतिनिधिपर्वणि अवस्था-

नुचरप्रतिनिधिपर्वण्यप्यवस्थानमपहास्यं तेऽपि मत्साम्यमाधिक्यं वा प्रतिलब्धुं मोघवृत्तिं मनोरथमारोहन्ति ।

इह हि ।

छन्दश्छन्दितबुद्धयः पदविदः कल्पे विकल्पत्यज
शिक्षाशिक्षितमानसा विगणितज्योतिर्गणावृत्तयः ।
निर्णीतार्थनिरुक्तयस्त्रिविधया मीमांसया मांसला
नृत्यन्तो नयविस्तरेषु सुधियस्सर्वे मया खर्विताः ॥५॥

(आकाशे) रेरे बालिश किं ब्रवीषि कुतस्तवेयं शिक्षा कीदृशी च परिचितिरिति (सहस्तास्फालनं विहस्य)

विधिमन्तरेण विहगेन कुत
पयसोरशिक्षत विवेकविधिः ।

---

नमनुचराणामसन्निधाने तत्प्रतिनिधितया समावेशोऽप्यपहास्य इत्यर्थः । मोघा व्यर्था वृत्तिः प्रवृत्तिः यस्य तम् । मनोरथमारोहन्ति अनुचरप्रतिनिधिपर्वण्यप्यवस्थानमपहास्यमित्युक्तं तत्कथमित्यपेक्षायाम् । साङ्गागमादिविदस्सर्वे मया लघवः कृता इत्याह

छन्द इति–॥ छन्दश्शब्दः छन्दोविचितिपरः । छन्दोभिः उक्थात्युक्थादिभिः छन्दिताः अलङ्कृताः बुद्धयो येषां ते तथा पदविदः व्याकरणविदः कल्पे कल्पसूत्रेषु आश्वलायन बोधायन द्राह्यायणादिषु विकल्पत्यजः संदेहत्यजः निस्संशया इत्यर्थः । शिक्षया वर्णस्वरादिकया शिक्षितानि मानसानि येषां ते तथा विगणिताः विशेषेण गणिताः निश्चिताः ज्योतिर्गणस्य सूर्यादेरावृत्तयः तत्तद्राशिषु संचाराः यैस्ते तथा- निर्णीतार्था निरुक्तयो यैस्ते तथा त्रिविधया कर्मदेवताब्रह्मगोचरया मीमांसया मांसलाः पूर्णाः तदभ्यसनैकपराः नयविस्तरेषु काणादादिन्यायशास्त्रेषु नृत्यन्तः तदभ्याससन्तुष्टाः एवं भूता बहवस्सर्वेऽपि मया खर्विताः खर्वाः कृताः असामर्थ्यादल्पाः कृताः इत्यर्थः ॥ ५ ॥

रेरे इति क्षुद्रं प्रति संबोधनम् । हस्तयोः आस्फालः आघट्टनम् ॥

विधिमिति–विहगेन हंसेन पयसोः क्षीरनीरयोः विवेकविधिः इदं क्षीरं इदं नीरमिति विवेचनं विधिमदृष्टमन्तरेण विना कुतः कस्माद्धेतोः

कति वा दिनानि वद पर्यचिनोत्
कलशीसुतः कवलयन्जलधिम् ॥ ६ ॥

आस्तां तावद्विश्वतोमुखीयमास्माकी विद्या अभिजनवृत्ताभ्यामप्यहं निस्समाभ्यधिकः ।

तथाहि ।

मद्वंशोद्भवयाजनार्हपुरुषाभावादमुष्मिन्जग-
त्या गोत्रप्रथमादनध्वरतया प्रख्यातमस्मत्कुलम् ।
अप्रत्यक्षमनक्षपीडनविधिप्रागल्भ्यतस्स्थापितं
विष्वग्वृत्ति तपः परं किमपि मे विश्वाधिकं के विदुः ॥७॥

पुरस्तात्पश्यन् अहह ।

बहव इह नरछात्रा बाह्याः कुदृष्टय इत्यमी
मिषति विबुधस्तोमे मेरुं विगूहयितुं क्षमाः ।

---

अशिक्ष्यत शिक्षितः । जलधिं कवलयन् कलशीसुतः अगस्त्यः कति कियन्ति दिनानि पर्यचिनोत् तथेदमपि मम सार्वज्ञं स्वाभाविकमेवेति भावः ॥ ६ ॥

विश्वतः सर्वतः मुखं यस्यास्सा विश्वतोमुखी सर्वशास्त्रावगाहिनीत्यर्थः । विद्याज्ञानं अभिजनं कुलशुद्धिः वृत्तं आचारः ताभ्यामप्यहं निस्समाभ्यधिकः समाधिकरहितः ।

तदेवोपपादयति तथाहीति ॥

मद्वंशोद्भवेति–मद्वंशोद्भवानां याजने हिंस्यपुरुषस्य अलाभात् दौर्लभ्यात् अस्मत्कुलं आ गोत्रप्रथमात् गोत्रप्रथममारभ्य अनध्वरतया अध्वररहिततया प्रख्यातम् । अप्रत्यक्षं प्रत्यक्षागोचरं अक्षाणां इन्द्रियाणां पीडनं नियमः यस्मिन्नविद्यते सोनक्षपीडनः एवासौ विधिश्च विधीयत इति विधिः कर्म तस्य प्रागल्भ्यतः स्थापितं विष्वक् सर्वत्र वृत्तिः वर्त्तनं यस्य तत्तथा विश्वस्मात् तपसः अधिकं श्रेष्ठं किमपि अचिन्त्यं मे तपः के विदुः नकोपि जानीयुः ॥ ७ ॥

अहहेति हर्षे ।

बहव इति–॥ विबुधस्तोमे देवसमूहे मिषति चक्षुरुन्मील्य पश्यत्यपि मेरुं हेमाद्रिं

प्रबलकुहनागम्भीराभिः प्रलोभनयुक्तिभि
र्जडबधिरपङ्ग्वन्धप्रायं जगज्जनयन्ति च ॥ ८ ॥

अथवा ।

अनपह्नुतवद्भिरद्ययावत्
प्रतिपक्षानिह किं प्रमाणवर्गैः ।
स्ववशे विनिवेशयामि विश्वं
मणिमन्त्रौषधिवञ्चनोपजापैः ॥ ९ ॥

किमाह कश्चित् प्रतिष्ठिते प्रमाणवर्गे कथं कैश्चिदेवं पाटच्चर-वृत्तिः प्रतिपत्तव्येति । सरोषहुङ्कारं पश्य अरे ब्राह्मणापशद सार्वलौकिकं गगनतलमलिनिमप्रत्यक्षं किं न प्रामाणिकैः परिभूयते ॥

अपि च ।

षड्भिः पूर्वप्रणीतैरलमिह समयैरश्रद्दधानप्रमाणै
र्वस्तुस्थित्यैकरूप्ये मतिविहतिहते कस्य कीदृग्व्यवस्था ।

---

विगूहयितुं क्षमाः शक्ताः बाह्याः कुदृष्टय इत्यमी नः बहवः छात्राः शिष्याः सन्तीति शेषः प्रबलाभिः कुहनाभिः कापटैः गभीराभिः दुरवगाहाभिः प्रलोभने वञ्चने युक्तिभिः जगज्जगति स्थितान् जडबधिरपंग्वन्धप्रायं जडादितुल्यं जनयन्ति कुर्वन्ति च । अनेन अहं शिष्यसंपदा च निस्समाभ्यधिक इत्यस्याभिप्रायः ॥ ८ ॥

पक्षान्तरमाह अथवेति ।

अनपह्नुतेति—॥ अद्ययावत् अद्यपर्यन्तं प्रतिपक्षान् विरोधिनः अनपह्नुत-वद्भिः अतिरस्कुर्वद्भिः प्रमाणानां प्रत्यक्षादीनां वर्गैः स्तोमैः किं न किमपि प्रयोजनं इह जगति मणिमन्त्रौषधिवञ्चनोपजापैः विश्वं स्ववशे विनिवेशयामि उपजापः समीपे स्थित्वा बहुधा निवेदनम् ॥ ९ ॥

प्रमाणवर्गैः किमित्युक्तं तदसहमानस्य वाचमनुवदति किमाहेति—॥ प्रति-ष्ठिते स्थिरतरे सति पाटच्चराणां तस्कराणां वृत्तिर्व्यापारः प्रतिपत्तव्या अंगीकर्तव्या इति किमाह एवमस्माकं पुरस्तादयुक्तमुक्तवानिति क्रोधाद्धुङ्कारः । सार्वलौकिकं सर्व-लोकविदितं गगनतलमलिनिमविषयं प्रत्यक्षं प्रामाणिकैः परिभूयते न किं परिभूयत एवेत्यर्थः । अतः प्रमाणानामपि परस्परव्याघातोऽस्त्येवेति भावः ।

अक्षुभ्यद्द्वित्रकदध्याव्यवहरणसहानस्मदुन्नीतयुक्त्या
सिद्धान् सिद्धान्तभेदान्मदुपहितधियः प्रत्यवस्थापयन्तु ॥

( अपसव्यं पश्यन् ) एते मगधकलिङ्गान्ध्रद्रमिडकर्णाटकेरलकोङ्कणादयो जनपदाः अहह ।

अष्टाचत्वारिंशतं बौद्धभेदान्
नीचोक्त्याहं हेलया निर्मिमाणः ।
अध्यासीनो बोधिवृक्षस्य मूलं
विद्यादर्पं वैदिकानामहार्षम् ॥ ११ ॥

ततः प्रभृति सुगृहीतनामानो नाममात्रनिश्शेषितविपक्षास्सप्तद्वीपनिहितजयस्तम्भास्संचरन्त्यस्माकमन्तेवासिनः ।

अपि च ।

अद्वैतं क्वचिदर्पितं क्वचिदिह द्वैतं मयासाधितं
द्वैताद्वैतसमाहृतिः क्वचिदसौ दुस्थाव्यवस्थापिता ।

---

अन्यदप्याह अपि चेति–॥

षड्भिरिति–॥ सन्निधानानां प्रमाणैः प्रमाणभूतैः पूर्वप्रणीतैः प्राचीनपुरुषप्रणीतैः षड्भिः समयैः अलं तेषु आदरः न कार्य इत्यर्थः । वस्तुस्थितेः ऐकरूप्ये सति विरुद्धत्या मतानां विरोधेन हते सति कस्य वस्तुनः कीदृक् व्यवस्था कस्याश्चिदपि व्यवस्थाया अभावात् । एवं सति सिद्धान्तभेदो न सिध्येदित्यत आह अक्षुभ्यदिति–। अस्माभिः उन्नीतया युक्त्या सिद्धान् अक्षुभ्यन्तीनां द्वित्रकक्ष्याणां व्यवहरणसहान् सिद्धान्तभेदान् मया उपहिता उद्भाविता धियो येषां ते तथा सन्तः प्रत्यवस्थापयन्तु प्रत्यवस्थितान् कुर्वन्तु ॥ १० ॥

एते मगधादयो जनपदाः ।

अष्टेति–॥ नीचा हीना उक्तिर्यस्यां तया भाषया भेदान् निर्मिमाणः कुर्वन् अहं बोधिवृक्षस्य अश्वत्थस्य मूलं अध्यासीनस्सन् वैदिकानां विद्यादर्पं विद्याजनितं दर्पं अहार्षं हृतवानस्मि ॥ ११ ॥

सुगृहीतनामानः नाममात्रेण स्वनामश्रवणमात्रेण निश्शेषिताः छिन्नाश्रिताः विपक्षा येषां ते तथा ।

तत्तद्युक्तिसुधाप्रहोदितकथाकल्लोलतो वादिनां
मन्ये सम्प्रति मल्लमेषसमरप्रेक्षारसम्प्राप्नुमः ॥ १२ ॥

(परिवृत्यावलोक्य) एते पुनर्यवनतुरुष्काद्युपप्लुताः प्रत्यन्तदेशाः ।

इह च ।

वादद्यूतपणं प्रकल्प्य किमपि क्षिप्ताभिमानः क्वथन्
कश्चिद्वैदिकपद्धतिं द्विजपतिः क्षिप्रं मया त्याजितः ।
अर्हद्बुद्धबृहस्पतिप्रभृतिभिः क्लृप्तान्कृतान्तक्रमा
नन्योन्यव्यतिहारितानपि पठन्व्यामोहयत्यर्भकान् ॥१३॥

अमी च पशुमृगपक्ष्यादिकल्पैरनार्यैरधिष्ठिता नास्मद्दृष्टिगोचरता-मर्हन्ति । एतेष्वनिश्चिताचाराः कक्षावलम्बितपुस्तका विस्तारितकूर्चभाराः केचिदेते विपश्चित इवाभान्ति । आः प्रतारितोस्मि गाढमापातदृष्ट्या ।

---

अद्वैतमिति-॥ एतेषु क्वचित् केषुचित्पुरुषेषु अद्वैतमैक्यं अर्पितमुपदिष्टं मया क्वचिद द्वैतं भेदस्साधितः क्वचित् दुस्था दुःखेन स्थिता असोद्वैताद्वैतयोः समाहृतिः समाहारः व्यवस्थापिता वादिनां तत्तद्युक्त्या तत्तन्मतादरेण यो सुधारसः व्यर्थारसः तेन उदितायाः उत्पन्नायाः कथायाः वादस्य कल्लोलतः तरङ्गजालात् संप्रति मेषाणां मल्लानां च समरस्य युद्धस्य प्रेक्षया दृष्ट्या यो रसः प्रतीतः तं प्राप्नुमः ॥ १२ ॥

यवनतुरुष्काद्युपप्लुता आदिशब्देन तत्तुल्यशीला अवैदिका गृह्यन्ते उपप्लवः उपद्रवः प्रत्यन्तदेशाः पाश्चात्यसमुद्रसमीपवर्तिनः देशाः ।

वादेति-॥ कश्चित् द्विजपतिः मण्डनमिश्रः किमपि परस्परमतप्रवेशं वाद एव द्यूतं तस्मिन्पणं प्रकल्प्य प्रतिवादिना जितः अत एव क्षिप्ताभिमानः क्वथन् परितप्यमानः वैदिकानां पद्धतिं मया क्षिप्रं त्याजितः अन्योन्यव्यतिहारितान् परस्परव्यामिश्रान् अर्हत्प्रभृतिभिः क्लृप्तान् कृतान्तक्रमान् पठन् सन् अर्भकान् व्यामोहयत्यपि च मन्दमतीन् मोहयति च । अत्रेयं कथा अनुसन्धेया । पूर्वं कदाचित् शङ्करमण्डनमिश्रौ परस्परमतप्रवेशपणं प्रकल्प्य वादमकुरुतां ततः शङ्करेण जितः मण्डनमिश्रः तन्मतं प्रविश्य एकदण्डसन्यासं कृत्वा सुरेश्वरवार्त्तिकाख्यं प्रबन्धं निर्माय तेन मन्दमतीन् मोहितवानिति ॥ १३ ॥

तथा हि ।

अनियतबहुजल्पैरल्पबोधावलिप्तै
रवमतगुरुवर्गैरत्रिवर्गापवर्गैः ।
अभिनयविधुताङ्गैरङ्गुलीनृत्तसारैः
अलमिह जडभूभृत्पीठमर्दैरमीभिः ॥ १४ ॥

( उत्तरतोदृष्टिं दत्त्वा ) कश्चिदिहासौ काश्मीरतो वा जलन्धराद्वा दक्षिणाभिमुखस्समायाति । एतस्मात्तावत्प्रिययोरवस्थानं परिपृच्छामि । भद्र सुब्राह्मण किञ्जानासि दुर्मतसमादेशाददिराजपरिक्रमणाय प्रस्थितयोरस्मद्गृहिण्योरीर्ष्यासूययोरधुनातनं वृत्तान्तं । कर्णन्दत्वा, (किमाह) ते किल सुमतिसखीभिर्मैत्रीकरुणामुदितोपेक्षाभिः प्रतारिकाभिः कस्याञ्चिन्निवृत्तिपथसुरङ्गायान्निरुद्धे इति । ( सक्रोधं ) आः पापोयं अलीकवादी ब्राह्मणवेतालः । रेरे दुरात्मन् वैधवेय श्रोत्रियब्रह्मराक्षस कथं सर्वलोकाभिसरणेप्यस्मत्सहधर्मचारिणीत्वमनुभवन्त्योर्महाभागयोरनयोरेतादृशम-

---

अस्मद्दृष्टिगोचरतां नार्हन्ति अनिश्चितान्यक्षराणि येस्ते तथा । आपातदृष्ट्या अनिरूपणेन प्रतारितोस्मि वञ्चितोस्मि । प्रतारितत्वमेव विशदयति तथाहीति-॥

अनियतेति-॥ अनियता बहवो जल्पाः येषां तैः अल्पेन बोधेनावलिप्तैः अवमताः अवज्ञाताः गुरूणां वर्गा यैस्तैः नविद्यते त्रिवर्गापवर्गौ येषांतैः अभिनयेषु तत्तदर्थाभिनयेषु विधुतानि पटूनि अंगानि येषां तैः अङ्गुलीनां नृत्तं चलनमेव सारो येषां तैः जडाः मूढाः ये भूभृतः राजानः तेषां पीठमर्दैः

पीठमध्यस्यपुरवः प्रबोध्यान. यकादिषु ।
स पीठमर्दो विश्वास्यो कुपितस्यः प्रसादकः ॥

इत्युक्तलक्षणैः अमीभिः अलम् एतैः न किञ्चिदपि प्रयोजनमित्यर्थः ॥ १४ ॥

जलन्धरोनाम देशविशेषः । प्रिययोः इष्टयोः अवस्थानं स्थितं । अद्रिराजे हिमाद्रौ परिक्रमणाय संचाराय अधुनातनं अद्यतनं । प्रतारिकाभिः वञ्चनपराभिः निवृत्तिपथः निवृत्तिधर्मः स एव सुरङ्गा तस्यां । ब्राह्मणवेतालः ब्राह्मणरूपपिशाचः वैधवेयः विधवापुत्रः । सर्वलोकाभिसरणे सत्यपि अस्मत्सहधर्मचारिणीत्वं अनुभवन्त्योः सर्वलोकाभिसारिण्योः सहधर्मचारिणीत्वासम्भवेपि तादृशमहिमशा-

त्याहितं सम्भविष्यति । निर्वर्ण्य प्रागप्यवगतोऽयं पर्वतीयैर्व्याधपतिभिः प्रणिधिभावेन प्रेषितः पर्यटनशीलः कश्चित्पान्थः ( सपरिहासं ) अहो देशकालविशेषसंभवोऽयं दोषसमवायः ।

यथा ।

श्वश्रूरस्य दिगम्बरव्रतवती सम्बन्धिनस्सौगता
माता चास्य पिता च पाशुपतिनौ वैशेषिको देशिकः ।
जाया तिष्ठति सांख्ययोगसमये चार्वाकशिष्यस्सखा
मिथ्याचारसमाह्वयस्स्वयमसौ विप्लावकोऽवैदिकः ॥१५॥

तदयं मिथ्याचारनामा व्याधप्रणिधिरलीकवादी चासंभाष्यो मादृशैर्महात्मभिः । एतदवलोकनदोषपरिहाराय दिवाकरमात्मानं वा पश्यामि । ( विकटं परिक्रम्य ) अहहे महानद्योरिह गङ्गायमुनयोरमी मध्यमा जनपदाः । एतेषु चावधीरितबृहस्पतिप्रज्ञानामस्माकमनन्तसिद्धान्तसृष्टिकर्बुरमुपन्यासं प्रजापतिपशुपतिदत्तवरोऽपि कः पुनः प्रत्येष्यति । कुतः

लिन्यावेते इति हृदयं । अत्याहितं विपद् । निर्वर्ण्य सम्यक् दृष्ट्वेत्यर्थः । अवगतः ज्ञातः प्रणिधिभावेन चारत्वेन प्रेषितः । वक्ष्यमाणार्थस्मरणादपहासः । देशकालयोर्विशेषाभ्यां सम्भव उत्पत्तिर्यस्य स तथा । समवायमेवाह यथेति ।

श्वश्रूरिति–॥ अस्य श्वश्रूः दिगम्बराणां व्रतं दिगम्बरव्रतं तद्वती । सम्बन्धिनः स्नुषायाः पुत्र्यादेश्च जनकादयः सौगताः बौद्धाः पितरौ पाशुपतिनौ पाशुपतनिष्ठौ देशिकः गुरुः वैशेषिकः जाया स्त्री साङ्ख्ययोगसमये साङ्ख्ययोगः साङ्ख्यविषयकं ज्ञानं समयः तज्जनकं शास्त्रं तस्मिन्तिष्ठति सखा चार्वाकशिष्यः लोकायतिकशिष्यः असौ स्वयं मिथ्याचारसमाह्वयः मिथ्याचाराख्यः विप्लावकः आचाराणां विप्लवकारी अत एव अवैदिकः ॥ १५ ॥

एतदवलोकनदोषस्य अवलोकनजनितदोषस्य परिहाराय दिवाकरं पश्यामीत्युक्त्वा तत्रापरितोषात् ततोऽपि पावनमात्मानं स्वदेहं वा वाशब्द एवार्थः स्वदेहमेव पश्यामीति वदति । अनन्तानां सिद्धान्तानां सृष्ट्या कर्बुरं नानारूपं प्रजापतिपशुपतिभ्यां दत्तवरोऽपि कः प्रत्येष्यति ज्ञास्यति अपवर्गमार्गस्य निरोधे उद्यतेन अधरो-

पुनरनुवादादयः । इह सापवर्गमार्गनिरोधोद्यतेनास्मत्स्वामिना समाहूतैरपराक्तवासिभिर्म्लेच्छपतिभिरधरोत्तरीकृता राजधान्यः । चरन्ति चात्र केचिदमी चक्रवर्त्तिनो डाम्भिकानां ।

एते च ।

अयाचन्तः किंचित्स्वयमुपनतेनादरगिरो
धनायाशैलूषीसहचरितसाकूतगतयः ।
निवृत्त्याख्ये धर्मे स्थितिमभिनयन्तो निरुपधिं
नमस्यन्ते सद्भिर्नवमरसनाडिन्धमदृशः ॥ १६ ॥

अपि च हन्तैतत्कलेरनङ्कुशमाधिराज्यं महामोहस्य वा तपसां परिपाकः ।

स्वतन्त्रवरवर्णिनीसुरतकेलिसौत्रामणी
रसार्चितमनोभवां रहसि निर्विशद्भिः क्षपां ।
दिवा विविधभूमिकाविहितकञ्चुकैर्वञ्च्यते
वियात्कितवैरिदं वितथदत्तवित्तं जगत् ॥ १७ ॥

---

तराः कृताः अधरोत्तरीकृताः विपर्यस्ता इत्यर्थः । डांभिकानां चक्रवर्तिनः राजानः ॥

अयाचन्त इति–॥ किञ्चिदपि वस्तु अयाचन्तः स्वयमुपनते धनधान्यादिके अनादरा आदररहिता गिरो येषां ते तथा धनाया धनेच्छा सैव शैलूषी नर्तकी तया सहचरिताः तत्सहिताः साकूताश्च गतयो व्यापारा येषां ते तथा निवृत्याख्ये निवृत्तिसंज्ञे धर्मे निरुपधिं निर्व्याजां स्थितिमभिनयन्तः नवमरसनाडिन्धमाः शान्तिरसनाडिन्धमाः दृशः येषां ते तथा शान्तिरसोत्तंभकनयनविलसिताः इत्यर्थः सद्भिर्नमस्यन्ते ॥ १६ ॥

अनंकुशमप्रतिहतं । परिपाकः फलनिष्पत्तिः । किं तदित्यत्राह–

स्वतन्त्रेति-॥ स्वतन्त्राः स्वाधीनाः वरवर्णिन्यो वेश्याः तासां सुरतकेलिः सुरत क्रीडा सैव सौत्रामणी इष्टिविशेषः तस्यां रसः तेनअर्चितः आराधितः मनोभवः यस्यां तां क्षपां रात्रिं रहसि निर्विशद्भिः नयद्भिः दिवा दिवसे विविधाश्च ताः भूमिकाश्च ताभिः विहितकञ्चुकैः वियात्कितवैः धृष्टचौरैरिदं जगत् वितथं व्यर्थं यथा तथा दत्तं वित्तं धनं यस्य तत्तथाभूत वञ्च्यते ॥ १७ ॥

अत्र चामी म्लेच्छाधिष्ठितं देशमपरित्यजतां बहिरावरणमात्र संरक्षितवर्णाश्रमधर्माणामनन्यगतिकानां द्विजानामवहाराः ।

एतेषु च

संस्काराः परमुत्सवैकवपुषस्सन्ध्या विनोदावधि-
स्सावित्री जनवादजर्झरतनुश्शौचन्नटप्रायिकं ।
इत्थं मोहमहीपतेरनुमते विश्वं विपर्यस्यतः
कालस्यैव कलेरलेपकमतव्यक्तक्रमः प्रक्रमः ॥ १८ ॥

अहो नु खलु अयमपि महानत्र धर्मक्रमः

तरुणाकृतयः कचेषु कृष्णा-
स्तइमे दम्पतयस्सहैव साध्यम् ।
इतरेतरदैवतं भजन्ते
मदनोपज्ञमजस्रमग्निहोत्रम् ॥ १९ ॥

बहिरावरणमात्रेण वेषमात्रेण न तु मनश्शुद्ध्यादिनेति भावः संरक्षिता वर्ण-धर्माः आश्रमधर्माः येषां तेषां ।

संस्कारा इति—॥ संस्काराः गर्भाधानादयः परमधिकं उत्सवैकवपुषः उत्सव मात्रशरीराः न तु विध्युक्तमन्त्रतन्त्रादिसंस्कृताः सन्ध्या प्रातस्सन्ध्यादिका विनोदानां सहासोक्तीनां अवधिरेव अवधिः परा काष्ठा यस्यास्सा तथा सावित्री सन्ध्यासु जप्यमाना सावित्री जनानां वादैः जर्झरा विशीर्णा तनुः यस्यास्सा तथा शौचं शुद्धिः नटप्रायिकं नटानामिव अत्यल्पं मोहमहीपतेः महामोहस्य राज्ञः अनुमते विश्वं विपर्यस्यतः विपरीतं कुर्वतः कलेः कालस्यैव प्रक्रमः प्रकारः अलेपकानां प्रपञ्चस्य बुद्धिपूर्वोत्तराघाश्लेषं वदतां मते व्यक्तः स्फुटः क्रमो यस्य स तथा । एवं वर्णाश्रमधर्मविपर्यासहेतुः कलिरलेपकमतानुसारीति भावः ॥ १८ ॥

कोऽसौ धर्म इत्यत आह—

तरुणेति—॥ तरुणा आकृतयः तनवो येषां ते तथा कचेषु कृष्णाः विशेषणद्वयेन युवत्वं जरावैधुर्यं च द्योत्यते कृष्णकेशोऽग्नी नादधीतेति अग्निहोत्रे अधिकारश्च । त इमे तेदम्पतयः सहैव मिलित्वैव साध्यं इतरेतरदैवतं परस्परदेवताकं मदनोपज्ञं मन्मथोपदेष्टृकं अग्निहोत्रमजस्रं भजन्ते ॥ १९ ॥

अपिच

प्रतिवीथिकमाश्रयन्त एते
कुहनासूक्तिमयीं कुसीदवृत्तिम् ।
अपरीक्षितशिष्यमद्य सर्वे
शुकवद्ब्रह्म पठन्ति शुद्धवेषाः ॥ २० ॥

अन्यतोऽवलोक्य एते चिरार्पितमुक्तदुरुद्वर्माभाः पुराणपठितिमठभित्तिकोणमाश्रित्य जोषमासते ( सूक्ष्मं निर्वर्ण्य ) अहहामी दीर्घतरदर्भपूलपूरिताङ्गुलिविवरेण दक्षिणकरेण नासिकाङ्कुलयन्तः प्राणसंशयेनापि प्राणसंयमनमभिनयन्ति ( सहस्तास्फालनं )

अपटुफणितिभावाद्बिभ्रतो मौनमुद्रा-
मनितरशरणत्वादादृतान्योन्यसङ्घाः ।
अगतिविहितभिक्षावृत्तयः केचिदेते
चिरविधुततुरङ्गब्रह्मचर्या महान्तः ॥ २१ ॥

अन्यदप्याह अपि चेति—॥

प्रतीति—॥ कुहनासूक्तिः कपटोक्तिः तन्मयीं कुसीदवृत्तिं वार्धुषिकवृत्तिं प्रतिवीथिकं वीथ्यां वीथ्यामाश्रयन्त एते अपरीक्षिताः शिष्याः यस्मिन्कर्मणि तद्यथा भवति तथा शुद्धवेषास्सन्तः शुकवत् अर्थज्ञानविरहेण ब्रह्म वेदं पठन्ति ॥ २० ॥

पुराणानां पठितिमठः पुराणपठितिमठः तस्य भित्तिः तत्कोणमाश्रित्य जोषं तूष्णीमासते । दीर्घतरेण दर्भपूलेन पूरितान्यङ्गुलीनां विवराणि यस्य तेन दक्षिणकरेण प्राणस्य संशयेन प्राणोऽस्ति वा न वेति संशयेनापि प्राणसंशयं प्राणायाममभिनयन्ति ।

अपट्विति—॥ अपटुः भणितिः व्यवहारो यस्य स तथात्वात् असमीचीनभाषणत्वादित्यर्थः मौनमुद्रां बिभ्रतः न विद्यते इतरशरणं येषां ते अनितरशरणाः तत्वात् समर्थास्तु अन्ये एतैः न संगच्छन्ते अतः आदृतान्योन्यसंघाः संमानितपरस्परसमूहाः न विद्यते गतिर्येषां ते अगतयः अगतित्वात् विहितभिक्षावृत्तयः दरिद्रतया कृतभिक्षाजीवाः चिरविधुतं तुरङ्गब्रह्मचर्यं यैस्ते तथा । तुरङ्गब्रह्मचर्यं नाम मन्दुराबद्धानां तुरंगाणां मैथुनराहित्यं एवं भूताः केचिदेते वर्तन्त इति शेषः ॥ २१ ॥

( सोपक्रोशं हस्तौ विधून्वन् )

अनल्पमदपित्तलै रनुपरुद्धमानग्रहै
रजल्परणकर्कशैरपरिदृष्टतर्कक्रमैः ।
अतथ्यनियमस्थितैरनतिवृत्तडंभोद्यमै
रशिक्षितचमत्कृतैरलमसद्भिरेतादृशैः ॥ २२ ॥

( अन्यतो दृष्टिं प्रसारयन् ) अमी पुनरमुष्टिमेययज्ञोपवीतसंछन्न-वक्षसः करावलम्बिताक्षमालाः करचरणनयननासादिषु मन्त्रवर्णान्नि-रन्तरं न्यस्यन्तस्तीर्थयात्रोत्सुकपथिकसार्थयातायातपद्धतिपरिसरप्रति-ष्ठापितं चेलाजिनकुशोत्तरमासनमधितिष्ठन्ति । हन्तैषां महायोगि-नामद्भुतवैरपेक्ष्यं येनस्वयमप्यन्तर्हसन्ति । यतश्च

डम्भस्येव ध्वजममितया मण्डितं दर्भमुष्ट्या
द्राघीयांसं कमपि पुरतस्संप्रतिष्ठाप्य दण्डम् ।

उपक्रोशः जुगुप्सा ।

अनल्पेति–॥ अनल्पेन मदेन पित्तलैः पित्ताधिकैः अनुपरुद्धः अप्रतिबद्धः मानः अभिमान एवग्रहः भूतविशेषो येषां ते तथा जल्पः कथा विशेष एव रणः तस्मिन्कर्कशाः तैः अपरिदृष्टा अपरिचिताः तर्कक्रमाः यैस्तैः अतथ्येषु नियमेषु स्थितैः नविद्यते अतिवृत्तिः यस्य सः अनतिवृत्तिः डंभोद्यमो येषां तैरशिक्षितं चम-त्कृतं चमत्कारः येषां तैरलं ॥ २२ ॥

अमुष्टिमेयानि अमुष्टिपरिमितानि यज्ञोपवीतानि तैस्संछन्नं वक्षो येषां ते तथा । करतलेन अवलंबिता अक्षमाला येषां ते तथा मन्त्रवर्णानि मन्त्राक्षराणि तीर्थान्युद्दिश्य यात्रायां उत्सुकानां रसिकजनानां यातायातपद्धतौ गतागतमार्गे प्रतिष्ठापितं चेलाजिनकुशोत्तरं चेलं वस्त्रं अजिनं व्याघ्रचर्मादि कुशादर्भविशेषाः तान्युत्तराणि उपरिक्षिप्तानि यस्य तत्तथा आसनं अधितिष्ठन्ति । महायोगिनामि-त्यत्र व्यतिरेकलक्षणा अद्भुतमदृष्टपूर्वं येन नैरपेक्ष्येण । अन्तर्हृदये । कुतोहसन्ती-त्यत आह यत इति–॥

डंभस्येति–॥ अमितया दर्भमुष्ट्या मण्डितं दम्भस्य ध्वजमिव स्थितं द्राघी-यांसं अधिकोन्नतं कमपि दण्डं पुरतः संप्रतिष्ठाप्य नामतः आख्यामात्रेण तीर्थपादाः

पादोपान्तप्रणिहितधनान्प्राणिनो भक्तिनम्रान्
नावेक्षन्ते कितवमुनयो नामतस्तीर्थपादाः ॥ २३ ॥

अहहामी निरन्तरमात्सरं ध्यानमभिनयंतः पुरः प्रतिष्ठापितान्देवतामपि नोद्वीक्षन्ते अभ्यर्णमागतानपि आचार्यमातापितृप्रमुखानर्धनिमीलितेन लोचनेनावलोकयन्तोऽप्यनवलोकनन्नाटयन्ति। का कथा प्रणामादीनाम् । एतेषु च ।

शमदमवृत्तसमाधिषु निस्पृहभावे च नैष्ठिका डम्भाः ।
अयुतायुतांशकक्ष्यामडम्भडम्भस्य नार्हन्ति ॥ २४ ॥

अयं पुनरिहानुपतितमार्जारधूर्तबकवृत्तीनां त्रयीविद्यातपस्विनामग्रगण्यो महातपाः ।

शिक्षाविशेषनिभृताकृतिरूर्ध्वबाहुः
प्रक्रीडयन्निव निजान्तपसि प्रतिष्ठाम् ।
दर्भावृतो क्षितितले निहितैकपादः
चित्रं सजीवमिव तिष्ठति डाम्भिकेन्द्रः ॥ २५ ॥

तीर्थपावनचरणाः कितवमुनयः कपटतापसाः पदयोरुपान्ते प्रणिहितं न्यस्तं धनं यैस्तान् भक्त्यानम्रान् प्रह्वान् प्राणिनः नावेक्षन्ते न विलोकयन्ति ॥ २३ ॥

आराधनाय पुरतः प्रतिष्ठापितां अभ्यर्णे अभ्याशे अवलोकनस्याप्यभावे प्रणामादीनां काकथा ।

शमेति-॥ शमः चित्तप्रशान्तिः दम इन्द्रियजयः वृत्तं वर्णाश्रमाचारः समाधियोगः एषु निस्पृहत्वे च नैष्ठिका निष्ठावन्तः डंभाः अडंभडंभस्य अडंभं अभिनयतोऽडंभस्य अयुतांशस्य यः अयुतांशः तस्य कक्ष्यां साम्यं नार्हन्ति । अडंभडंभस्यान्ये डंभाः अयुतायुतांशकक्ष्यामपि नार्हन्तीति भावः ॥ २४ ॥

समीपागतानपि क्षुद्रमत्स्यानपीडयन् बकोधूर्तबकः अनुगता तद्वृत्तिर्यैस्तेषां । त्रैविद्यतपस्विनां त्रयीपठननिरततपस्विनां अग्रगण्यः अग्रेगणयितुं योग्यः ।

शिक्षेति-॥ शिक्षाविशेषेण निभृताकृतिः निश्चलशरीरः निजां तपसिप्रतिष्ठां प्रक्रीडयन्निवस्थितः दर्भैरावृते उन्नते प्रोक्षिते च तले निहितः एकः पादः यस्य सतथा डांभिकानां इन्द्रः सजीवं जीवसहितं चित्रमिव तिष्ठति ॥ २५ ॥

इतश्चायमेतादृशो यायजूकः

अलिकचिबुकनासाजानुबाहूदराद्यै
र्विवृतनतिविशेषो मृत्तिकालेपचिह्नैः ।
कनकगिरिमिवेच्छन् कश्चिदग्नीन्समिन्धे
मुकुलितनयनार्धो मूर्तिमानेष दम्भः ॥ २६ ॥

( परिवृत्यावलोक्य ) अहो नु खलु काषायदण्डमात्रशरणानां कलियुगसन्यासिनां नैरपेक्ष्यम् ।

भिक्षेति शिष्यजनरक्षणदक्षिणेति
शाटीति शाश्वतमठोपधिकल्पनेति ।
ग्रन्थोपसंग्रहणमूल्यमिति ब्रुवाणाः
सन्यासिनोऽपि दधते सततं धनायाम् ॥ २७ ॥

सहर्षं, नूनमीदृशपुरुषावष्टब्धे जीवलोके सिद्धप्रायं समीहितं महामोहस्य । अथाप्येतदिह सितासितनदीसंभेदो विवेकस्थानमिव किञ्चिदाभाति । यदुत

---

एतादृशः अस्यायमेव सदृशः यायजूकः यज्ञशालः ।

तमेवाह–

अलिकेति–॥ मृत्तिकायाः लेप एव चिह्नं येषां तैः अलिकं ललाटं आदिशब्देन अङ्गुष्ठबाहून्तरकपोलानां ग्रहणं अलिकाद्यैरवयवैर्विवृतः विस्तृतः प्रकाशितः इत्यर्थः नतिविशेषः प्रणामविशेषः यस्य स तथा मुकुलितं नयनार्धं यस्य स तथा मूर्तिमान् विग्रहवानेषं दम्भः कनकगिरिं मेरुमिच्छन्निव अग्नीन्समिन्धे ॥ २६ ॥

काषायदण्डावेव शरणं येषां तेषाम् ।

नैरपेक्ष्यमेव विशदयति–

भिक्षेति ॥– शिष्यजनानां सेवनदक्षिणा सेवाभृतिरिति शाटीकाषायवस्त्रं शाश्वतस्य सन्यासिपरंपराप्राप्तस्य मठस्य उपधिकल्पना तद्दार्ढ्यहेतुस्थूणातुलादि कल्पना ग्रन्थोपसंग्रहणस्य पुस्तसंपादनस्य मूल्यम् ॥ २७ ॥

हर्षहेतुमाह नूनमिति समीहितमिष्टं सिद्धप्रायं सिद्धतुल्यमित्यर्थः । सितासित नद्योः गङ्गायमुनयोः संभेदः संमेलनम् । विवेकस्थानत्वे हेतुमाह यदुतेति–॥

आचारोदधिसैकतप्रतिनिधिर्मृत्पिण्डकूटः क्वचित्
पापच्छेदनशस्त्रजालपरुषः कुत्रापि दर्भोत्करः ।
पूजाशेषितपुष्पपल्लवफलस्तोमस्स्फुरत्यन्यतो
मन्ये कस्यचिदेतदाश्रमपदं मान्यं महायोगिनः ॥ २८ ॥

अत्र च

विरुद्धमतिकर्दमं विषयवृत्तिविन्ध्याटवीं
त्रिवर्गमृगतृष्णिकां त्रिगुणवागुरायन्त्रणां ।
निवर्त्य नियमक्रमैस्स्फुरति मुक्तवत्कोप्यसा
वपत्यमथवाग्रजस्सवितुरेष तातोपि वा ॥ २९ ॥

उपसर्पामि तावदेनम् । ( इत्याश्रममासीदति निमित्तं सूचयन् सहर्षं ) नूनमिह मे प्रियासमागममत्यासन्नमभिव्यनक्ति दर्शितस्पन्दलास्यं दक्षिणञ्चक्षुः । ततः प्रविशति प्रव्रजितवेषधारिण्यसूया–

---

आचारोदधिसैकतेति–॥ आचारः वर्णाश्रमोचितशौचाचमनाद्यनुष्ठानं स एवोदधिः तस्य सैकतप्रतिनिधिः पुलिनसदृशः महान्क्वचित्प्रदेशे मृत्पिण्डानां कूटः समूहः पापानां छेदेन शस्त्रजालवत्परुषः क्रूरः दर्भाणां उत्करः उच्चयः पूजायाः शेषितान्यवशिष्टानि पुष्पपल्लवफलानि तेषां स्तोमः राशिः स्फुरति अतः कस्यचिदाश्रमपदं मन्ये ॥ २८ ॥

अत्र आश्रमपदे ।

विरुद्धेति–॥ विरुद्धा वेदविरुद्धा मतिर्ज्ञानं सैव कर्दमः तं विषमा शास्त्रनिषिद्धा वृत्तिर्व्यापारः सैव विन्ध्याटवीतां त्रयो वर्गाः धर्मार्थकामाः त एव मृगतृष्णिका मरीचिका तां त्रयो गुणाः सत्वरजस्तमांसि त एव वागुरा जालं तस्यायन्त्रणं बन्धनं नियमानां क्रमैः परंपराभिः निवर्त्य कोपि मुक्तवत्स्फुरति असौ तु सवितुः अपत्यं अथवा अग्रजः तेजोविशेष्यात् अथवा तातः ॥ २९ ॥

निमित्तं दक्षिणाक्षिस्पन्दनरूपं सूचयन्नभिनयन् । दर्शितः स्पन्दनं चलनं स एव लास्यं येन तत् ।

प्रव्राजितानां सन्यासिनां यो वेषः तद्धारिणी । स्वकृत्यमाह अहंहीति–।

असूया—अहं हि विवेकपरिपन्थिचूडामणेर्महाराजस्य महामोहस्य देव्या दुर्मत्या विश्वजनहृदयविस्रम्भकवेषपरिग्रहेण विदुषां चित्तमुपप्लावयितुमादिष्टा परिक्रान्तचतुर्दशभुवना प्रयागतीर्थमवगाह्य प्रतिगतास्मि भगवतो धर्मध्वजाख्यस्य कुलपतेराश्रमम् । निपुणमिहापि गुणवद्विषये दोषानुद्घाटयितुं चारतन्त्वं तन्त्रयितव्यम् । स्वसामर्थ्यं बहुमत्य

मयि दत्तावधानायां विश्वदोषापहारिणा ।
न शक्यमीश्वरेणापि निरवद्येन वर्तितुम् ॥ ३० ॥

निरङ्कुशाः खलु मत्परिगृहीताः पुरुषा नित्यमविद्यमानमपि दोषं विद्यमानवदापादयन्ति किमुत विद्यमानं ।

तथाहि

निरवधिगुणग्रामे रामे निरागसि वागसि
स्फुरणमुषितालोका लोका वदन्ति सदन्तिके ।

---

विवेकस्य परिपन्थिनां विरोधिनां चूडामणेः श्रेष्ठस्य विश्वेषां जनानां हृदयस्य विस्रंभकः यो वेषः तस्य परिग्रहेण विदुषां चित्तं उपप्लावयितुं संक्षोभयितुं परिक्रान्तानि चतुर्दशभुवनानि यया सा तथा गुणवति विषये दोषानुद्भावयितुं उत्पादयितुं च चारतन्त्वं चारकृत्यं तन्त्रयितव्यं कारयितव्यम् ।

बहुमत्य बहुत्वेन मत्वेत्यर्थः ।

तत्प्रकारमेव आह—

मयीति—॥ मयि दत्तावधानायां अवहितायां सत्यां विश्वान्दोषानपहरतीति विश्वदोषापहारी तेन ईश्वरेणापि निरवद्येन निर्दोषेण वर्त्तितुं न शक्यं । असूयालवोऽहि भगवत्यपि दोषानुद्भावयन्तीति भावः ॥ ३० ॥

निरवधीति—॥ वागेव असिः तस्य स्फुरणेन मुषितः अपहृतः आलोकः ज्ञानं प्रकाशः येषां ते तथा लोकाः जनाः निरवधिः गुणग्रामो यस्य तस्मिन् निरागसि रामे भरतनोः ताटकायाः हतिं वालिद्रोहं अन्येन युध्यमानस्य हननं मनाक् अल्पं अपसर्पणं खरायोधने पश्चादेऽस्य पदस्यापसर्पणं सतामन्तिके समीपे अतः परि-

वरतनुहतिं वालिद्रोहं मनागपसर्पणं
परिमितगुणे स्पष्टावद्ये मुधा किमुदासते ॥ ३१ ॥

परिक्रम्य क एते प्रत्यासन्नसुरसरिदनूपनीपवनमहीतलनिहित-योगासनाः स्थिरतरपर्यङ्कबन्धबन्धुरनिभृतोन्नततरर्जुकाया मुण्डजटिल-शिखाजटा मुनयः । निर्वर्ण्य हन्त विदितमेतत् ( सान्तर्हासं )

स्तनभरनतमन्तर्ब्रह्म सञ्चिन्तयन्तः
पुलकितनिभृताङ्गाः पुष्पबाणागमस्थाः ।
विजितकरणवर्गा विश्रुतात्मान एते
मुषितनिखिलधर्मा मुक्तभावं भजन्ते ॥ ३२ ॥

नामतश्चैतान्निर्दिशामि

---

मिताः गुणाः यस्य तस्मिन् स्पष्टं अवद्यं यस्य तस्मिन् जन इति शेषः मुधा उदासते उदासीना भवन्ति किं वदन्त्येवेत्यर्थः ॥ ३१ ॥

प्रत्यासन्नायाः सुरसरितोनूपे तीरे यन्नीपवनं तस्य महीतले निहित पर्यङ्काः स्थिरतरेषु पर्यङ्केषु बन्धेन नियमनेन बन्धुराः सुन्दराः निभृताः निश्चलाः उन्नताः प्रांशवः ऋजवः अवक्राः काया देहा येषां ते तथा मुण्डाः केचित् जटिलाः केचित् शिखाजटाः शिखामात्रजटाः केचित् वर्तन्ते । एते के इति विचारः हन्तेति हर्षे । विदितमेतन्मयेति शेषः- अन्तर्हासेन हृदयहासेन सहितं यथा तथा ॥

इदं वक्ष्यमाणार्थप्रतिसन्धानेन-

स्तनेति-॥ अन्तश्चित्ते ब्रह्म संचिन्तयन्तः तत्कीदृशं स्तनभरेण नतं योषिद्रूपं पुलकितं निभृतंचाङ्गं येषां ते तथा पुष्पबाणागमे कामशास्त्रे तिष्ठन्तीति तथोक्ताः विजितः स्वस्वविषयेभ्य आहृत्य एकतानीकृतः इन्द्रियाणां वर्गः यैस्ते तथा करण-वर्गविजिता इतिवा । आहिताग्न्यादिवत् समासः । विश्रुतः विशेषेण श्रुतः आत्मा स्वस्वरूपं यैस्ते तथाविश्रुतः प्रसिद्धः आत्मा स्वभावो येषां ते तथा वर्णाश्रमधर्म त्यागिनः । पुण्यपापे विधूयेति श्रुतेः । विधूतसकलधर्मा इति च ब्रह्मचिन्तनं पुलकितांगत्वं आगमनिष्ठत्वं जितेन्द्रियत्वं आत्मवित्वं विधूतधर्मत्वं इत्येतानि मुक्तलक्षणानि ततएव मुक्तभावं भजन्ते ॥ ३२ ॥

एतान् पूर्वोक्तान् ।

श्रद्धायाजी षड्रसब्रह्मवादी
कामैकान्ती काकणीनिष्कदासः ।
मार्जाराणां कुक्कुटानां बकानां
छात्रा एते सिद्धचार्वाकतन्त्राः ॥ ३३ ॥

स्वस्ति चैतादृशां स्वोपकारमात्रसंरम्भाय । दृश्यते हि

नवदलपुटे कल्प्या यस्य प्रभोरपि तल्पधीः
नटपरिवृढो यस्याधस्ताच्छ्रमं शमयिष्यते ।
वटविटपिनस्तस्याङ्कुराननुत्कटपल्लवान्
स्थपुटचटसापेक्षी भिक्षुः प्रतिक्षणमीक्षते ॥ ३४ ॥

( आकाशे कर्णं दत्वा ) किं ब्रूथ भिक्षवः । प्रव्रज्यापरिग्रहः परिवदनञ्चेति विप्रतिषिद्धमिति । ही ही निगृहीता एव यूयं स्ववचन-

---

श्रद्धेति—॥ अन्येषां स्वस्मिन् श्रद्धोत्पत्तये यजतीति श्रद्धायाजी षड्रसा एव कट्वाम्ललवणमधुतिक्तकषाया एव ब्रह्मेति वक्तुं शीलमस्यास्तीति तद्वादी कामे मन्मथे एकः मुख्यः निश्चयो स्यास्तीति कामैकान्ती कामपुरुषार्थ एव श्रेयानिति निश्चयवान् काकणीनिष्कस्य अशीतिभागमात्रहेम्नः दासः एते मार्जाराणां यत्रकुत्रचिन्निश्चलतया स्थित्वा समीपागतस्वाभिमतग्राहिणां छात्राः बलात्कारेण स्त्रीसंभोगं कुर्वतां कुक्कुटानां पर्याप्तप्रयोजनपर्यन्तं अल्पाननवेक्षमाणानां बकानां च शिष्याः सिद्धं चार्वाकतन्त्रं येषां ते तथा ॥ ३३ ॥

स्वोपकारमात्रसंरंभाय स्वस्ति अस्त्वतिशेषः । संरंभो दृश्यतेहीत्यर्थः ।

नवेति—॥ यस्य वटस्य नवे दलपुटे पत्रपुटे प्रभोर्हरेरपि तल्पधीः पर्यंकबुद्धिः कल्प्या भगवान् हि प्रलयसमये सर्वमुपसंहृत्य महार्णवे वटदले शेत इति प्रसिद्धेः नटानां परिवृढः प्रभुश्शंभुः यस्याधस्तात् मूलदेशे श्रमं ताण्डवजनितं शमयिष्यते शंभुः किल सन्ध्यासुताण्डवं कृत्वा तज्जन्यं श्रमं वटमूले स्थित्वा शमयतीति प्रसिद्धं तस्य वटविटपिनः वटवृक्षस्य अनुत्कटाः अप्रकाशाः पल्लवाः येषां तान् अंकुरान् स्थपुटचटसे विशालायतभाजने अपेक्षा अस्यास्तीति स्थपुचटसापेक्षी भिक्षुर्माणवकः प्रतिक्षणं ईक्षते । एतद्दलानि कदा परिणतानि भविष्यन्ति कदाहं तैः पृथुलं चटसं गृहीत्वा भिक्षां ग्रहीष्यामीति क्षणे क्षणे पश्यतीति भावः ॥ ३४ ॥

आकाशे कर्णदानं भिक्षुवचश्श्रवणार्थं किं ब्रूथेति तद्वचनानुवादः । प्रव्रज्यायाः सन्यासव्रतस्य परिग्रहः परिवदनं परिवादः सन्यासिनां परिवादस्य निषिद्धत्वात्

विरोधेन। प्रव्रजिताः खलु भवन्तोऽपि स्वगृहेभ्यः परिवदन्ति च मामिति ( अन्यतोऽवलोक्य ) अयमपरः कश्चिदिह रौक्मकुण्डलदण्डकमण्डलुमण्डितः कटितटनिबिडनिगुम्भितदर्भरज्जुरष्टकाश्राद्धभोजननिरन्तराध्मातकुक्षिरनवरतविरचितहुङ्कारभर्त्सितपुरोवर्त्तिजन इतस्ततो दत्तदृष्टिस्तृणीकृतजगत्त्रयास्त्रैविष्टपैरपि दुष्प्रवेशं धर्मध्वजस्य कुलपतेराश्रममुपजिगमिषति। इमन्तावदाश्रमद्वारोपरोधेन तस्युषी विशेषतो विविदिषामि।

दर्पः—उपसृत्य प्रश्रयमभिनयन् अयि भगवति भारतकथाप्रसिद्धवैभवा प्रव्रजिताश्रमाधिदेवताकल्पा प्रत्यायितयोगसिद्धिस्सुलभैव सन्दृश्यसे। तदहमिह ग्रामकुलगोत्रादिभिर्विशेषतस्त्वां विजिज्ञासे।

असूया—भद्र अन्तिमाश्रमप्रविष्टैरवक्तव्यं पृच्छसि। अप्रणम्य तु मां कथं यूपवत्तिष्ठसि।

दर्पः—वयःकर्मविद्यादिभिरधिकोऽहं आश्रमाधिका तु भवती। इहतु नन्तृनन्तव्यभावे सन्दिहानस्तिष्ठामि।

असूया—अथ तर्ह्यस्मिन्नाश्रमे योऽसौ कुलपतिरशेषधर्मविदास्ते तमेव धर्मसङ्कटं पृच्छावः—

---

नवास्मत्परिवदनं विप्रतिषिद्धमिति किं ब्रूथेति अन्वयः। हीहीति जुगुप्सायां। स्ववचनविरोधेन युवामेव निगृहीताः कुत इत्यत आह प्रव्रजिता—इति। प्रस्थिताः खलु भवन्तः रौक्मे रुक्मकृते कुण्डले कटितटे निबिडं यथा भवति तथा गुंभिता वेष्टिता रज्जुर्यस्य स तथा तृणीकृतं तृणं कृतं जगत्त्रयं येन स तथा। त्रैविष्टपैः देवैः इमं प्रकृष्टं आश्रमद्वारोपरोधेन आश्रमद्वारावरणेन तस्युषी स्थिता विविदिषामि वेत्तुमिच्छामि।

प्रश्रयं विनयं। भारतकथायां प्रसिद्धवैभवा प्राव्राजकाश्रमस्य अधिदेवतातुल्या प्रत्यायिता प्रत्ययवती योगसिद्धिर्यस्यास्सा तथा विजिज्ञासे विज्ञातुमिच्छामि। ग्रामकुलगोत्रादिभिरित्यत्रादिशब्देन अभिजनो गृह्यते।

अन्तिमाश्रमः सन्यासाश्रमः वयःकर्मविद्यादिभिरित्यत्रादिशब्देन अभिजनो गृह्यते। अशेषान्धर्मान् वेत्तीति अशेषधर्मवित्। धर्मयोस्संकटं संकटं किं तदित्यत आह—

दर्पः—यदभिमतं भवत्यास्तदभ्युपगच्छामि । तिष्ठत्वयं विमर्शः । किन्तु किञ्चिदन्तर्वर्त्तते ।

भवतीं सन्निवेशेन भाववीक्षितचेष्टितैः ।
अनुभूतचरीं मन्ये वेषस्तु विषमस्तव ॥ ३५ ॥

असूया—अहमपि दृष्टपूर्वमिव भवन्तं भावयामि तिष्ठत्वयं विमर्शः परमहंसपरिव्राजकैरपि महानुभावैर्वृत्तवृद्धेति क्रियासमभिहारेण वन्दितपादां महाभागां मामप्रणम्य दीपदण्डवत्तिष्ठतः पाण्डरपटस्य ते प्रायश्चित्तिं ब्राह्मणेन विधापयितुं तव च शुद्धिमापादयितुमिच्छामि ।

दर्पः (स्वगत) परिगृहीतान्त्याश्रमा प्रगल्भमिव किं प्रजल्पति (प्रकाशं) सविचिकित्सं अस्तुतर्हि असौ आश्रमस्वामी प्रष्टव्यः इत्युभावुपसर्पतः ।

दम्भः—उभौ दृष्ट्वा मौनव्रतमभिनीय पत्नीं चेष्टया चोदयति ।

* कुहना—ससंभ्रममुपसृत्य भद्द बह्मण भअवद् सण्णासिणि तुह्मेहिं अह्मघरवइसआसादो दूरे ठाअव्वं दीहमग्गागमणदूसिआणं तुह्माणं अकिअमज्जणाणं अच्चासत्ती दूरपरिहरणिज्जा

* भद्र ब्राह्मण भगवति सन्यासिनि युवाभ्यामस्मद्गृहपतिसकाशाद् दूरे स्थातव्यं दीर्घमार्गागमनदूषितयोर्युवयोरकृतमज्जनयोरत्यासत्तिर्दूरपरिहरणीया

भवतीमिति—॥ सन्निवेशेन संहननेन भावाः विलासाः वीक्षितानि दृग्विलासाः चेष्टितानि यातायातानि तैः अनुभूतचरीं अनुभूतपूर्वां भूतार्थे चरट् प्रत्ययः वेषस्तु इदानींतनवेषस्तु विषमः पूर्वस्माद्विषमः ॥ ३५ ॥

परमहंसपरिव्राजकैः परमहंसाश्चते परिव्राजकाश्च तैः वृत्तेन वृद्धेति क्रियासमभिहारेण पौनःपुन्येन पाण्डरः पटो यस्य तस्य गृहस्थस्येत्यर्थः । ब्राह्मेण वेदोक्तकर्मणा प्रायश्चित्तिं विधापयितुं कारयितुं । परिगृहीतः अन्त्याश्रमो यया सा तथा ।

आश्रमस्य दीर्घमार्गे आगमनेन दूषितयोः स्पष्टमतोरकृतमज्जनयोः अकृतस्नानयोः अत्यासत्तिः समीपागमनं । मन्त्रसिद्धेः मन्त्रफलसिद्धेः परिपन्थिनी ।

मन्त्तसिद्धिपरिपंथिणी अ तुह्माणं छाआ महाजोइविग्गहे मा होज्ज णं खु महप्पाणोवि मुणिअणा दूरे पणमन्ति तेहिं वि उवणीअं भाईरहीसलिलं ण काहेवि घरसामी हत्थेण घेप्पइ ।

दर्पः—अतिमहानयमपूर्वदंपत्योर्युवयोर्धर्मनियमः अपिच वयमाप्लुता गङ्गायमुनासङ्गमे पुण्यतमैश्च मन्त्रैः पुनः पुनः प्रोक्षिताः आदित्यवत्तेजस्विनां स्वयंप्रकाशविग्रहाणामस्माकं किं त्वया च्छायोपलभ्यते लभ्यते तु परं निरयपातः अहह सर्वलोकसम्भावितं सर्वाधिकं मामतिथिमिमां च परमहंसपरिव्राजिकामन्योन्यनवृत्नन्तव्यभावसंशयनिर्मोचनाय समधिगतावनादृत्य नूनमसौ ते पतिराश्रमापस्मारो मौनव्याजेन स्वमौढ्यमेव प्रच्छादयति ।

डम्भः—सभ्रूक्षेपं हुंकरोति ।

*कुहना—सरभसमुपसृत्य करतलेन मुखं पिधाय महप्पहा धधम्मद्धअ वाद्रुणिअमं जोग्गेण कम्मणा मोक्कूण जोग्गाणं अद्दहीणं जोग्गं पडिवअणं दाअव्वं ।

---

मन्त्रसिद्धिपरिपन्थिनी च युवयोश्छाया महायोगिविग्रहे मा भूत् एनं खलु महात्मानोपि मुनिजना दूरे प्रणमन्ति तैरप्युपनीतं भागीरथीसलिलं नकदापि गृहस्वामी हस्तेन गृह्णाति ।

* महाप्रभाव धर्मध्वज वाङ्नियमं योग्येन कर्मणा मुक्त्वा योग्ययोरतिथ्योर्योग्यं प्रतिवचनं दातव्यं ।

---

अपूर्वदंपत्योः अदृष्टपूर्वदंपत्योः अकारपूर्वदंपत्योरिति च । संगमे संभेदे । स्वयंप्रकाशः अनन्याधीनप्रकाशः येषां तेषां उपलभ्यते किं नोपलभ्यत एवेत्यर्थः । निरये नरके पातः पतनं तु लभ्यते । अहहेत्याश्चर्यं । सर्वैः लोकैः लोकस्थजनैः संभावितं पूजितं सर्वेभ्य अधिकमन्योन्यं नंवृनन्तव्यभावे संशयप्रशमाय । आश्रमापस्मारः—

आश्रमस्य अपस्मार इव वैरूप्यहेतुः ।
करतलेन मुखपिधानं प्रश्रयकार्यं ।
प्राणसंयमनं प्राणायामं ।
असंभाष्यैः संभाषणं ।

दम्भः—प्राणसंयमनमभिनीय प्रणवमुद्घोष्य ।

( स्वगतं )—अकामोपनतमिदमसंभाव्यसंभावणं—( प्रकाशं ) रेरे व्रात्य-ब्राह्मण मूढजनमूर्धाभिषिक्त स्वमौढ्यप्रच्छादकं मां प्रख्यापयसि दिष्ट्याखलु मया तपस्संक्षयभीरुणा नैतावन्तं कालं शप्यसे शप्ताः खलु मया कति कति भस्मसात्समपद्यन्त—अविदितपूर्व दुराचार दूरं गच्छ गच्छ मा ते भून्मम दृष्टितेजसा भस्मीभावः ।

दर्पः—सक्रोधं रेरे मूढ द्विजातिरिति जातिबहुमनादेव मया पादेन शिरसिनताड्यसे अपि च ।

तुण्डीरंमण्डलं मे कुलपतिरपिच स्कन्दभूपालवन्द्यः
क्षेत्रं सत्यव्रताख्यं क्षितितलतिलकं क्षुद्रकाञ्च्यग्रहारः ।
प्रख्यातः शिष्यभूम्ना दिशिदिशि भवता कूपकूर्मोपमेन
स्याता वादाहवेषु स्थविर कथमहं न श्रुतो नापि दृष्टः ॥३६॥

( विहस्य )—अहो महाडाम्भिक अविदितमदीयाचार किमिति दुराचार इत्युपक्रोशसि, अथवा कः खल्वयं मया विना मत्प्रभावज्ञः यस्य मे महायोगिनोपि अभिजनविद्यावृत्तेषु षोडशीमपि

व्रात्यः कर्मत्यागी । मूढजनानां मूर्धाभिषिक्त अधिपते दिष्ट्यादैवात् । तपस्संक्षयात् भीरुणा एतावन्तं कालं नशप्यसे शप्तो न भवसि । अविदितपूर्व अज्ञातपूर्व दुष्ट आचारो यस्य स दुराचारः ते भस्मीभावो मा भूत् ।

जातिं ब्राह्मण्यं ।

स्वोत्कर्षमाह अपिचेति—॥

तुण्डीरमिति—॥ मेमण्डलं तुण्डीरं कुलपतिस्स्कन्दभूपालवन्द्यः । स्कन्दभूपालेन वन्द्यः । क्षितेः तिलकनिभं सत्यव्रताख्यं क्षेत्रं अग्रहारः क्षुद्रकाञ्ची दिशि दिशि शिष्यभूम्ना शिष्याणां बहुत्वेन प्रख्यातः । वादाहवेषु स्याता अहं कूपकूर्मोपमेन भवता कथं न श्रुतः न दृष्टश्च । कूप एव वर्तमानः कूर्म इव क्वचित्स्थितः त्वं अत एव मां न श्रुतवान् न दृष्टवांश्चेति भावः ॥ ३६ ॥

अविदितः मदीय आचारः येन स तथा तस्य संबुद्धिः दुराचार इत्युपक्रोशसि मामिति शेषः । महायोगिनोपि यतो मम षोडशीं कलां नार्हन्ति अतएव

कलाञ्चार्हन्ति किमुत पृथग्जनाः अत एव हि श्रोत्रियानपि त्रिवर्षपूर्वांश्च नमस्करोमि किञ्च वेत्थ मामकं धर्मप्रवर्त्तनाभिसन्धिम् ।

रथ्यावादविशङ्क्यमानजरठासम्बन्धिसम्भाषणात्
त्यक्ता हन्त पतिव्रता गुणनिधिस्सत्रासमम्बा मया ।
विद्यातश्च विवाहतश्च विदितादाचारतश्च क्षितौ
कूटस्थाभ्यधिकस्य मे किमधिकः को वा समः कथ्यते॥३७॥

दम्भः—अरे ब्रह्मबन्धो दुर्विनीत दुराग्रह यद्येवं त्वमास्थितसमाचारः किञ्च परिव्राजिकाम्प्रणमसि पितरमिव सर्वलोकाभ्यर्चितं विदित सकलवेदितव्यैर्महात्मभिरप्यविदितवैभवं त्रिवर्षपूर्वं श्रोत्रियं मां धर्मपत्नीं च मम पतिव्रतावृत्तिनियमेन प्रत्यचितपरावरतत्त्वैरपि पितामहादिभिः क्रियासमभिहारेण कृतनमस्कारां किञ्चाभिवादयसि ।

दर्पः—हे धर्मध्वज आत्मश्लाघापातकिन् अद्य खलु पूज्यपूजाव्यतिक्रमेण कपूयां योनिं प्रतिपत्स्यसे श्वयोनिं वा चण्डालयोनिं वा अहमपि

"त्रिवर्षपूर्वः श्रोत्रियोऽभिवादनमर्हति" इतिस्मृतौ सत्यामपि तांश्च नमस्करोमि । धर्मप्रवर्तने अभिसन्धिं किं न वेत्थ जगति प्रसिद्धमपि किं न जानासीत्यर्थः ।

रथ्येति—॥ रथ्यायां वादेन भाषणेन विशंक्यमानायाः इयं रथ्यायामुच्चैर्वदति स्वैरिणी किमिति जनैः शङ्क्यमानायाः जरठायाः संबन्धिभिः संभाषणात् हेतोः मया पतिव्रता गुणानां निधिरम्बा माता सत्रासं जरठासंबन्धिभिरियं संभाषणं कृतवती किल तत्सम्बन्धिसम्बन्धात् अस्या मातृत्वप्रयुक्तनमस्कारादिकमप्यनर्हामिति त्रासेन सहितं यथा भवति तथा त्यक्ता विदितात् सर्वलोकप्रसिद्धात् आचारतश्च कूटस्थाभ्यधिकश्च मे को वा समः सम इति कथ्यते विद्यादिभिः कूटस्थादप्यधिकस्य मम कोवान्यः साम्यं लभेत साम्यस्याप्यभावे आधिक्यस्य का कथेत्याशयः ॥३७॥

ब्रह्मबन्धुः ब्राह्मणापशदः । आस्थितस्समाचारो येन स तथा विदितानि सकलानि वेदितव्यानि यैस्तैः । महात्मभिरप्यविदितं आनन्त्यादपरिच्छिन्नं वैभवं यस्य तं वृत्तेषु नियमेन प्रत्यचितानि परावराणि तत्वानि यैस्तैः । क्रियासमभिहारेण पौनःपुन्येन ।

सर्वलोकसञ्चारी त्वदभ्यर्चकं क्वापि कमपि न पश्यामि ( सोच्चैर्हासं ) भो जड वञ्चक ।

प्रजानां पतयो दृष्टाः पशूनां बृहतामपि ।
न च त्वमधिकस्तेभ्यो न चास्मान्बहुमन्यसे॥३८॥

नूनं मदधिकजनपरिवादेन सहसैव निरयङ्गमिष्यसि ।

*कुहना *भअवइ एसो दुब्बह्मणो महेसिपरिवादेण विणासं पडिवज्जइ।

असूया—अयि धार्मिकपत्नि दुर्ब्राह्मणीव किमिति नामाभ्यागतमतिथिमधिक्षिपसि किन्तु अन्योन्यपरिवादिनावेतौ महानुभावौ तयामावाभ्यां तन्तव्यौ ।

डम्भः—सक्रोधं रेरे वाचाटवायस सारमेय इव वृथापर्यटनशीलोऽसि तथाहि ।

जातिमात्रशरणा बहिष्कृताः
केचिदादृतजघन्यवृत्तयः ।

---

* ( छाया ) भगवति एष दुर्ब्राह्मणो महर्षिपरिवादेन विनाशं प्रतिपद्यते ।

---

आत्मश्लाघया स्वप्रशंसया पातकिन पूज्येषु पूजाव्यतिक्रमेण कपूयां कुत्सितां योनिं जातिं । कोसावित्यत आह श्वेति–॥ तद्य इह कपूय चरणाः कपूयां योनिमापद्यन्ते । श्वयोनिं सूकरयोनिं चण्डालयोनिं वा इति श्रुतिरनुसन्धेया । सर्वलोकसंचारीत्येतद्विशेषणं साभिप्रायं तन्मोढ्यज्ञानेन उच्चैर्हासः ।

जड वञ्चकेति प्रत्येकं संबोधनं ।

प्रजानामिति–॥ प्रजानां पशूनां बृहतामपि पतयः बृहतां पतयः बृहस्पतयः त्वं तेभ्यो नाधिकः अथाप्यस्मा च बहुमन्यसे ॥ ३८ ॥

अधिकः उत्तमः ।

भगवति सन्यासिनि । एष दुर्ब्राह्मणो महर्षिपरिवादेन विनाशं प्रतिपद्यते ।

वाचाटः बहुगर्ह्यवचनः स चासौ वायसश्च तस्य संबुद्धिः । सारमेयः श्वा सहि इतस्ततो वृथा पर्यटति । सारमेय इति तत्साम्यमुक्तं । तदेव विशदयति–।

जातीति–॥ जातिमात्रं ब्राह्मण्यादिमात्रमेव शरणं रक्षकं येषां ते तथा मात्रचातज्जात्युक्ताचारे वैधुर्यं द्योत्यते स्वपक्षे जातिशब्देन हीनवस्तुभूयिष्ठगण्डूष

रोषणा विपरिधाविनो मुधा
ह्रेपयन्ति जनमुज्झितह्रियः ॥ ३९ ॥

दर्पः—(सहस्तास्फालनं, विहस्य) यथार्थस्थितवादिने मह्यं मर्कट इव किमिति कुप्यसि ।

दम्भः—रेरे स्तम्भ इव वृथास्थूलस्त्वं विश्ववृत्तान्तं न जानासि ।

मयि चरति कदाचित्सत्यलोकोपकण्ठे
सपदि सनकमुख्यैस्साकमभ्युज्जिहानः ।
सविनयविधृताङ्गस्सत्वरः चालितेन
स्वयमुदवहदर्घ्यं पाणिना पद्मयोनिः ॥ ४० ॥

कति कतीह पुरातनतापसाः
कमलसंभववंशसमुद्भवाः ।

---

पादप्रक्षालनाद्युचितस्थलं गृह्यते । तन्मात्रशरणाः तदेकनिलयाः बहिष्कृताः महद्भिः परित्यक्ताः अन्यत्र सर्वजनैरपि काष्ठलोष्टादिभिः दूरोत्सारिताः आदृता जघन्या वृत्तिर्व्यापारो येस्ते तथा अन्यत्र आदृता जघन्यैः वस्तुभिः पुरीषादिभिः वृत्तिः वर्तनं जीवनं यैस्ते तथा रोषणाः अल्पेपि निमित्ते रोषवन्तः मुहुः विपरिधाविनः इतस्ततो धावन्तः उभयत्र समानमेतद्विशेषणद्वयं उज्झितह्रियः त्यक्तलज्जाः इदमपि तथा एवं भूताः केचिज्जनं जनिमद्वस्तुजातं ह्रेपयन्ति व्रीडयन्ति एतदवलोकनमपि जनानां व्रीडाहेतुरिति भावः ॥ ३९ ॥

यथार्थस्थितं अवस्थितमनतिक्रम्य । स्तम्भ इव वृथास्थूलः यथा स्तम्भः स्थूलोपि न किञ्चिज्जानाति तथा त्वमपि विश्वमपि वृत्तान्तं न जानासि ।

कोऽसौ वृत्तान्त इत्यत आह—।

मयीति—॥ कदाचित् सत्यलोकोपकण्ठं मयि चरति सति पद्मयोनिः सनकः मुख्यः येषां तैः मुनिभिस्साकं सपदि अभ्युज्जिहानः अभ्युत्थितस्सन् सविनयं विनयेन सहितं यथा भवति तथा विधृतानि अंगानि येन स तथा सत्वरः सप्रकृत्य चालितेन पाणिना स्वयमेव अर्घ्यमुदवहत् ॥ ४० ॥

अन्यदप्याह—॥

कतिकतीति—॥ कमलसंभवस्य चतुर्मुखस्य वंशे समुद्भवः उत्पत्तिर्येषां ते

अतितरन्ति महान्त्यपि पातका
न्यहह मामकपादजलाप्लुताः ॥ ४१ ॥

कुहना—*सेच्चं एअं दिट्ठं मआवि सहधम्मआरिणीआ ।

दर्पः ( स्वगतं ) नूनमयमार्यो डम्भः इयमपि कुहना नखल्वन्येषामीदृशच्चारित्रं अतिवदनं वा संभवति तदेतावेवास्मद्गुरुभूतावभ्युपगमयामि ( प्रकाशं ) भगवति विश्ववेदिनि युक्तिसिद्धमिह किमपि भगवत्यै निवेदयामि—

परधनहरणप्रवीणभावा
कुटिलमतिः कुहनैव सेयमार्या ।
पशुवधपरिशेषनामयज्ञ-
स्स्ववशजनस्स्वयमेष डम्भ एषः ॥ ४२ ॥

तत्कथमेतत्सकाशाद्धर्मसंकटंमोचयावः ।

असूया—अहमप्येवं संभावयामि ।

---

* सत्यमेतदद्दृष्टं मयापि सहधर्मचारिण्या ।

---

तथा पुरातनतापसाः मामकपादजलाप्लुताः कतिकति इह महान्त्यपि पातकान्यतितरन्ति अहहेति हर्षे ॥ ४१ ॥

आर्यः ज्येष्टः अतिवदनं अत्युक्तिः ॥

युक्तिसिद्धं युक्तिभिस्सिद्धं किमपि तत्किमित्यत आह—॥

परेति—॥ परेषां धनस्य हरणे प्रवीणः समर्थः भावो अभिप्रायो यस्यास्सा तथा पशूनां वधः मारणं परिशेषः नामयज्ञः नाममात्रेण यज्ञः नतु तद्युक्तक्रियाभिः यद्वा नामनिमित्तभूतो यज्ञः वाजपेययाजी अतिरात्रयाजीत्यादिनाम्नां हेतुभूतयज्ञो यस्य स तथा स्ववशः स्वाधीनः जनोयस्य स तथा ॥ ४२ ॥

धर्मसंकटं धर्मसंशयं ।

दम्भः—(सान्तर्हासं) युवामप्यहं युक्तितः स्थापयामि—

ध्रुवमत्र गुणोत्तरापवादी
ध्वनिसारस्त्वयमागतोऽसि दर्पः ।
परिकल्पितवीतरागवेषा
तव भार्येव भवेदसाववश्या ॥ ४३ ॥

(नेपथ्ये) गृहपतिरतिथिश्चसत्यवादिनावेतौ गौडलाटधार्मिकौ ।

सर्वे सप्रत्यभिज्ञं परस्परमवलोक्य सन्तोषमभिनयन्ति ।

दम्भः—(सानन्दं) सखे दर्प अभिव्यञ्जिता वयमशरीरिण्या भारत्या ।

दर्पः—अवितथवादिनी खल्वेषा तदार्येणापराधो मामकः क्षन्तव्यः ।

दम्भः—मयापि खल्वपराद्धं ।

दम्भदर्पौ—अन्योन्यमञ्जलिं बध्नीतः निबध्नीतश्च—प्रियवचनं असूयाकुहने गाढं मिथ आश्लिष्यतः

दम्भदर्पौ—यथामनोरथमिह वयं यदृच्छया देव्या समागताः अभिगन्तव्यस्त्वनन्तरं समये महाराजः ।

ततः प्रविशति महामोहो दुर्मतिश्च ।

---

युक्तितस्थापनं कथमित्यत आह—॥

ध्रुवमिति—॥ गुणैः विद्यावृत्तादिभिः उत्तरेषु श्रेष्ठेषु अपवदितुं दूषयितुं शीलमस्यास्तीति अपवादी ध्वनिः कण्ठध्वनिः सारः बलं यस्य स तथा परिकल्पितः वीतरागाणां परिव्राजकानां वेषो यया सा तथोक्ता ॥ ४३ ॥

गृहपतिः डंभः अतिथिः दर्पः गौडदेशे डंभप्राचुर्यं लाटदेशे दर्पप्राचुर्यं चेत्यवगन्तव्यं । गृहपतिरित्यादिका अशरीरिणो भारती ।

एषा पूर्वोक्ता । आर्येण ज्येष्ठेन ।

महाराजः महामोहः ।

तत एवमेताभ्यां सूचनानन्तरं दुर्मत्या सह महामोहः प्रविशति ।

नासूचितस्य पात्रस्य प्रवेशो निर्गमोपिवेति लक्षणात् ।

महामोहः (विचिन्त्य) प्रिये महासाहसिकस्य कुलघ्नस्य विवेकस्य विध्वंसने कृतप्रतिज्ञेन मया समाधिसाकाङ्क्षपुरुषसंक्षोभणाय प्रेषितास्सिंहवनगुप्तिन्यायेन परस्पराभिरक्षिताश्च कामक्रोधादयः कालोपपन्नकातर्यकलुषितास्सैकतसेतव इव भग्नव्यूहाः प्रतिनिवृत्य कथमप्यस्मन्मुखमवलोकयितुमक्षमाः प्रतिदिशं प्रस्थाय प्रायोपवेशमास्थिता इत्युपश्रुतमस्माभिः तदिह भवत्या तत्प्रेयसी रतिजिघांसातृष्णास्तत्सकाशङ्गमयित्वा मामकास्ते मन्त्रिणस्समाश्वासयितव्याः ।

दुर्मतिः—* अ॰ अउत्त एव्वं एव्व ताओ ताणं समीवं गमिआओ ।

महामोहः—साधु प्रिये साधु यदस्मद्दुल्लभोचितमनुष्ठितं भवत्याप्रत्याश्वस्तास्ते समरसमये समाहूतव्याः ।

दुर्मतिः—† एव्व एव्व ।

महामोहः—(विषादातिशयं नाटयन्) प्रिये अद्ययावदप्रतिहतकीर्तिरपत्रपेऽहमसदृशेन कुलात्मना विवेकेन सह विवादस्संवृत्त इति यथा त्वं नारीषु निस्समाभ्यधिका तथाहं पुरुषेषु । यतः ।

---

* आर्यपुत्र एवमेव तास्तेषां समीपं गमिताः ।

† एवमेव ।

---

कृतप्रतिज्ञायेन तेन । समाधौ साकांक्षस्य पुरुषस्य संक्षोभणाय । सिंहवनगुप्तिन्यायेन सिंहाक्रान्तं वनं दुराधर्षं भवति वनस्य गाढतया सिंहोऽपि दुराक्रमः एवं सिंहवनयोः परस्परं गुप्तिः सिंहवनगुप्तिः तस्याः न्यायेन । काले तस्मिन् काले उपपन्नं कातर्यं भयं तेन कलुषिताः सैकताः सिकतानिर्मिताः सेतव इव प्रायोपवेशं आमरणमनुत्थानं उपश्रुतमाकर्णितं । तत्प्रेयसीः तेषां कामक्रोधलोभानां प्रेयसीः रतिजिघांसातृष्णाः तेषां कामादीनां सकाशं गमयित्वा ।

अद्ययावत् एतावन्तं कालं इत्यर्थः अप्रतिहता कीर्तिर्यस्य स तथा । असदृशेन विवादो लज्जाहेतुः विवादश्च विवाहश्च समयोरेवशोभत इत्युक्तेः ।

कथमसदृशत्वं इत्यत आह यथेति— । निस्समाभ्यधिकत्वे हेतुमाह—॥

सुरदनुजगणास्स्वमूर्ध्नि नित्यं
निदधति शासनपत्रिकां मदीयां ।
प्रतिफलितलिपिप्रकारदीप्य
न्मणिमकुटांशुमषीरसानुलिप्ताम् ॥ ४४ ॥

अपि च ।

वर्गः स्वर्गसदां मया नियमितः क्षोणीभृतः किं पुनः
पद्माम्भोनिधिपर्वतेषु निहितास्तिस्रो मया मूर्त्तयः ।
विश्वं स्रष्टुमकर्तुमन्यथयितुं मद्भूरमोघक्रमा
सोहं कस्य वशे क एष न च मे किं कस्य वा कथ्यते॥४५॥

(स्वगतं) किंतावदद्यकेनापि हेतुना प्रदीप्यमाने विवेके प्रतिविधातव्यं अस्तु नन्वहं महामोहः (प्रकाशं) प्रिये यद्यपि च सर्वत्र मया प्रवर्त्तितास्समयभेदाः कैश्चिदौपनिषदापशदै रहस्करकिरणा इव घनैः किञ्चिदन्तर्धापिताः यद्यपि च कामादयश्चिकीर्षितवैकल्यजनितवैलक्ष्यवशादनालक्ष्यागू-

सुरेति—॥ सुराणां दनुजानां च गणाः प्रतिफलितानां लिपीनां प्रकारेण दीप्यद्भिः मणिभिः इन्द्रनीलैः कृतस्य मकुटस्य अंशुरेव मषीरसः तेनानुलिप्तां मदीयां शासनपत्रिकां आज्ञापत्रिकां मूर्ध्नि निदधति ॥ ४४ ॥

अन्यदप्याह—॥

वर्गेति—॥ स्वर्गसदां देवानां वर्गः मयानियमितः एवं सति क्षोणीभृतः राजानः नियमिता इत्यत्र किं पुनर्वक्तव्यं तिस्रो मूर्त्तयः ब्रह्मविष्णुरुद्राः पद्मांभोनिधिपर्वतेषु कुशेशयदुग्धाब्धिकैलासेषु निहिताः विश्वं जगत् स्रष्टुं अकर्तुं पालयितुं अन्यथयितुं अन्यथा कर्तुं संहर्तुमित्यर्थः मद्भूः अमोघः फलवान् क्रमस्स्वभावो यस्यास्सा तया सोहं कस्यपुरुषस्यवशे न कस्यापि मे वशे न कः सर्वोपि कस्य पुरुषस्य किंकथ्यते । मद्विभवस्य सर्वलोकविदितत्वात् न किंचदपि कस्यचिद्वक्तव्यमिति भावः ॥ ४५ ॥

किं प्रतिविधातव्यमिति विचारः अस्तु । नन्वहमिति समाधानं । मयाऽसर्वत्र प्रतिष्ठिताः समयभेदाः कैश्चिदन्तर्धापिताः तिरोहिताः यद्यपि तिरोहिता एव चिकीर्षितस्य वैकल्येन जनितं वैलक्ष्यं येषां ते तथा विपर्यस्य व्यत्ययेन कृत्वा ।

छमासते तथापि भेदमभेदञ्चवस्तूनां पूर्वपक्षसिद्धान्तौ च सर्वत्र विपर्यस्य विश्वं व्यामोहयामि अथवा पुनरहमहङ्कारादिसंमतमचरमप्रमाणप्रधानमलौकिकार्थकल्पनादुर्व्यसनहीनमर्थकाममात्रपुरुषार्थकूटममवितथं सिद्धान्तं गम्भीरयुक्तिभिरुत्तम्भयन् वृथोत्साहमेव जडमतिं विवेकं विधित्सामि ।

अहह ।

**पृथिव्यापस्तेजः पवन इति तत्त्वानि मिलितै**
**रमीभिश्चैतन्यं भवति मदशक्त्यादिनयतः ।**
**किमात्मा दृष्टोऽन्यः किमुत वपुषि ध्वंसिनि सुखं**
**तदेतद्वागीशस्समतनुत लोकायतमतम् ॥ ४६ ॥**

उपनिषदपि खलु बलवदभिमतसमयबलीयस्त्वमभिसन्धाय व्यवस्थापयति "असुराणाँह्येषोपनिष"दिति तदिह त्रय्यन्त-

स्थूलोहं कृशोहमित्यनुभवो अहंकारः आदिशब्देन ममेदं गृहक्षेत्रादिकमित्येवं रूपममकारो गृह्यते तत् संमतमचरमं आदिमं प्रत्यक्षं प्रमाणं प्रधानं यस्मिन् तं अलौकिकानामर्थानां कल्पना सृष्टिरेव दुर्व्यसनं वृथायासः तेनहीनमर्थकामावेवपुरुषार्थौ यस्मिन् सः अर्थकाममात्रपुरुषार्थः तत्वेन कूटममवितथं शास्त्रं सिद्धान्तं उद्भावयन् वृथोत्साहं व्यर्थोत्साहं विधित्सामि विधातुमिच्छामि ।

प्रकृतमेव सिद्धान्तं वृचितः समुत्तंभयन् वक्तृविशेषादप्यस्य प्राबल्यं दर्शयति अहहेति-॥ हर्षद्योतकमिदं ।

**पृथिवीति-॥** पृथिव्यादीनि चत्वार्येव तत्वानि मिलितैः युक्तैः मदशक्त्वादिनयतः केषांचिद्वस्तूनां संमेलने मदजननसमर्थाशक्तिर्दृश्यते तद्वदेतेषामपि मिलितानां चैतन्यंजनितमस्ति अतः एतस्माच्चैतन्यात् अन्य आत्मा दृष्टः किं न दृश्यत एव एतद्वियोगे चैतन्यमपि नश्यति एतत् समुदायरूपे वपुषि ध्वंसिनि नष्टे सति किमुत सुखं न किंचिदपि सुखमस्ति अतः युक्तियुक्तोयं सिद्धान्तः वागीशः बृहस्पतिः तदेतत्लोकायतमतं समतनुत ॥ ४६ ॥

एतन्मतस्य प्राबल्ये उपनिषदपि प्रमाणमित्याह **उपनिषदपीति-॥**

बलवतामसुराणामभिमतस्य समयस्य बलीयस्त्वमभिसन्धायस्मत्वा व्यवस्थापयति केयमुपनिषदित्यत आह **असुराणामिति-।** उपनिषदां प्रामाण्यं वेदान्त-

वादिभिरुपनिषत्प्रामाण्यसमर्थनमपि अस्माकमरातिकर्लिखितविजयपत्रायते ।

अपि च ।

स्वमतविपरीतमन्यैः
क्रोशति हृदये विधीयते स्वैरं ।
अमरगुरुशिक्षितार्थै
रस्मत्सार्थैर्यथाहृदयम् ॥ ४७ ॥

दुर्मतिः-*अज्जउत्त पच्चक्खमत्तप्पमाणो बुहप्फइसिद्धन्तो बहुप्पमाणसाहि अपरोक्खविसआणं बहूणं इअरसिद्धंताणं पुरओ कहं ठाइ ।

महामोहः—प्रिये नूनं स्वमतप्राबल्यबुभुत्सया परिपृच्छसि तदेतदाकर्ण्यताम् ।

परमनुगुणयन्तः पण्डितंमन्यवर्गा
नवितथमिव जल्पन्त्यागमाः किञ्चिदेते ।
विबुधगुरुमतेऽस्मिन् व्यक्तमुत्तभ्यमाने
मुषितनिखिलसारा मौनमुद्रां भजन्ते ॥ ४८ ॥

* आर्यपुत्र प्रत्यक्षमात्रप्रमाणो बृहस्पतिसिद्धान्तः बहुप्रमाणसाधितपरोक्षविषयाणां बहूनामितरसिद्धान्तानां पुरतः कथं तिष्ठेत् ।

वेदिभिरंगीकृतं तदस्माकमत्यन्तमनुकूल मित्याह तदिहेति—। तदस्या उपनिषत्वादिह जगति अरातिकर्लिखितविजयपत्रायते शत्रुकरलिखितविजयपत्रं भवति । मतान्तराणां स्वानुभवविरोधं लोकायतिकस्य तदभावं दर्शयति—।

स्वमतेति—॥ अन्यैः मतप्रवर्तकैः हृदये क्रोशति एवं नेति प्रलपतिस्वैरं यथेच्छया स्वमतविपरीतं स्वानुभवविपरीतं विधीयते क्रियते अमरगुरुणा शिक्षितार्थैः निर्णीततत्वैः अस्मत्सार्थैः आस्माकैः यथाहृदयं यथानुभवं विधीयते ॥ ४७ ॥

स्वमतप्राबल्यस्य बुभुत्सयाम त्वेतत् दौर्बल्यशंकया किन्तदित्यत आह—॥

परमिति—॥ एते आगमाः पण्डितंमन्यानां आत्मनः पण्डितत्वेन मन्यमानानां वर्गान्मूढान् परमनुगुणयन्तः अनुकूलान्कुर्वन्तः किंचिदवितथं जल्पन्ति अस्मिन् विबुधगुरुमते व्यक्तमुत्तभ्यमाने प्रकाश्यमाने सति मुषिताः प्रतिक्षिप्ताः निखिलास्साराः युक्तयो येषां ते तथा मौनमुद्रां भजन्ते ॥ ४८ ॥

न खलु सहस्रमपि प्रतिसूर्याः कदाचिदपि सूर्यमभिभवन्ति ।

दुर्मतिः—* अ॰अउत्त पबलत्रमे इमस्सिं पुरंदरपुरोहिअमए का मुत्ती को वा भोओ का वा देवआ ।

महामोहः—श्रूयतान्तावदवहितया ।

शरीरप्रलयो मुक्तिर्भोगस्तु रतिरुत्तमा ।
देवतास्तत्प्रदायिन्यस्त्रियस्तारुण्यभूषणाः ॥ ४९ ॥

एवञ्चदेवि । परमार्थदर्शिन्यास्तवप्रत्यक्षत एवैते परिप्रश्नाः प्रत्युक्ताः अपिचास्माकं विवेकरूपवैरिविजयेएतासामेव प्रत्यक्षदेवतानां प्रसादः प्रधानकारणं

दुर्मतिः—† होदुणाम पसादो इत्थिआणं सल्लावजोग्गाणं सचेअणाणं देवआणं तेण कहं विवेओ विजेदुं तिरइ ।

महामोहः—इत्थंनाम ।

अपितपसिरतानाप्यधीतागमाना
मपियमनियमाद्यैरन्वहं शिक्षितानां ।

* आर्यपुत्र प्रबलतमेऽस्मिन्पुरन्दरपुरोहितमते का मुक्तिः को वा भोगः का वा देवता

† भवतु नाम प्रसादः स्त्रीणां सल्लापयोग्यानां सचेतनानां देवतानां तेन कथं विवेको विजेतुं तीर्यते ।

वक्ष्यामित्युक्तं अत्र उत्तरमाह—॥

शरीरेति—॥ शरीरस्य प्रकृष्टो लयः प्रलयः विनाशः तारुण्यं यौवनं भूषणं यासां ताः तथा ॥ ४९ ॥

एवं ते परिप्रश्नाः प्रत्युक्ताः विवेकरूपस्य वैरिणो विजये भवतु नाम प्रसादः स्त्रीणां सल्लापयोग्यानां सचेतनानां अनेन प्रतिमारूपाभ्यो देवताभ्यो वैलक्षण्यं तेन कथं विवेको विजेतुं तीर्यते शक्यते अत्रोत्तरमाह—॥

अपीति—॥ अधीताः आगमाः यैस्तेषां यमनियमाद्यैः आद्यशब्देन आसनादयो गृह्यन्ते अत्र ।

ब्रह्मचर्यमहिंसाच सत्यास्थेयापरिग्रहाः ।
योवेत्तिनिष्कामो योग्यतां समनोनयत् ॥

शिथिलयति समाधिं शिल्पिहस्तानपेक्षं
वरतनुमयचित्रं वासनाभित्तिलग्नम् ॥ ५० ॥

पठन्ति चौपनिषदाः परिहृतविषयानुरागतया परमपुरुषमुपलब्ध-
स्यापि जक्षणादिकमक्षीणविहृतिशालिनीभिरुपभोगञ्चेति
महदिदं सारस्यं नखलु वृश्चिकभयात्पलायमानैराशीविष
मुखे निपतितव्यं ।

अपि च ।

तमिस्राशीतांशुस्तबकवियदावर्तघटितैः
प्रक्लृप्तानां रम्भामणिमुकुरतूणीरनलिनैः ।
स्मरन्तः के धैर्यं दधति युवतीनामभिमुखं
स्मरस्कन्धावार प्रचलितपताका प्रतिभुवां ॥ ५१ ॥

अहह, अनादि शुद्धतया संमतानां वैकुण्ठवैमानिकानां वैनते-
यादीनामाजानसिद्धाः कतिकति विलासिन्यश्रूयन्ते, श्रूयते किल सकल-

---

स्वाध्यायशौचसन्तोषतपांसिनियतात्मवान् ।
कुर्वीत ब्रह्मणितथा परस्मिन्प्रवणं मनः ॥
एतेयमास्सनियमाः पञ्च पञ्चचकीर्तिताः ।
विशिष्टफलदाः काम्यानिष्कामानां विमुक्तिदाः ॥

इत्यादिकमनुसंधेयं । शिल्पिहस्ते यस्यापेक्षानास्तितत् शिल्पिहस्तानपेक्षं वासनैवभित्तिः तस्यां लग्नं वरतनुमयचित्रं समाधिं शिथिलयति ॥ ५० ॥

औपनिषदाः उपनिषत्संबन्धिनः वाक्यविशेषाः परिहृतः विषयानुरागः विषयेषु शब्दादिष्वनुरागः तस्यभावस्तत्ता तया । जक्षणादिकं जक्षणं भक्षणादिकं आदिशब्देन क्रीडादिकं गृह्यते अक्षीणविहृतिशालिभिः स्त्रीभिः उपभोगं च पठन्ति जक्षत्क्रीडन्रममाणस्त्रीभिर्वायानैर्वानोपजनुनं इत्यादयः इतीदं महदुपहास्यं । परित्यक्तविषयानुरागस्यमुक्तस्य पुनरपि विषयानुभवप्रतिपादन मपहास्यमिति भावः । हेयतयापरित्यक्तस्य विषयानुरागस्य पुनरपि सेवनं दृष्टान्तेन निवर्तयति न खलु—इति । पुनरपि विवेकविजये हेत्वन्तरमाह— ॥

तमिस्रेति—॥ तमिस्रातमः तमिस्राविघटितैः रम्भामणिमुकुरतूणीरनलिनैः

संसारनिवर्तकस्सर्वेश्वरो लक्ष्मीभूमिनीलानायकः, तदिह कामपुरुषार्थ-प्रतिक्षेपकैः कापेयवृत्तिभिः प्रतिभटभवनदिधक्षानिक्षिप्तेन पावकेनस्व-नगरमपि दन्दह्यते, यश्चासौमोक्षप्रद इति मुमुक्षुभिरुद्घुष्यते, सच-।

सत्वप्रवर्तकस्सन्
सहप्रियाभिः पुराण पुरुषोपि ।
बहुमुखभुजङ्गसङ्गी
विहरति विविधासुराजधानीषु ॥ ५२ ॥

ततश्चार्थाक्षपत्त प्रतिक्षेपोदिव्यदम्पतिसमर्थनञ्चेति शतप्रदान प्रतिक्षेपिणोमहाप्राज्ञस्य विंशतिपञ्चकप्रदानवचनवदपहास्यं किंच ।

मूढग्राह्यान्मोक्षधर्मप्रपञ्चान्
निर्मातॄणान्निष्प्रमाद प्रयुक्तः ।

---

पक्लृप्तानां युवतीनां स्मरस्कन्धावारे मन्मथसेनायां प्रचलितायाः पताकायाः प्रतिभुवां समानानां युवतीनां स्मरन्तः कैधैर्यं दधति युवतीनां स्मरन्त इत्यत्र अधीगर्थदयेशां कर्मेति कर्मणि षष्ठी ॥ ५१ ॥

अनादिशुद्धतया नित्यशुद्धतया संमतानां वैकुण्ठवैमानिकानां वैकुण्ठपुरदेवा-नां विष्वक्सेनवैनतेयादीनां एषां अनादिशुद्धत्वंदेवत्वं च

यत्र पूर्वे साध्यास्सन्तिदेवाः इत्यादिभि श्रुतिभिस्सिद्धं । आज्ञानसिद्धा-विलासिन्यः रुद्रासुकीर्तिप्रभृतयः सकलानां चेतनानां संसारनिवर्त्तकः तत् यस्मात् मुक्तनित्येश्वराणामपि कामपुरुषार्थप्रावण्यं दर्शितं तस्मात्कारणात् कापेया कपि-सम्बन्धिनीवृत्तिर्व्यापारो येषां तैः प्रतिभटभवनस्य शत्रुगृहस्य दिधक्षयादग्धुमि-च्छया निक्षिप्तेन निहितेन स्वनगरमपि दन्दह्यते स्वानर्थपर्यवसायीदमज्ञात्वा कर-णात्कापेय वृत्तित्वं न केवलमिदं भगवतः परत्वादिषु अर्चावतारेष्वपिकामपुरुषार्थ प्रावण्यमस्तीत्याह यश्चासाविति ॥

सत्वेति-॥ सत्वस्य सत्वगुणस्य प्रवर्त्तकः परमपुरुषोपि महान् प्रियाभिस्सह बहुमुखं यथा भवति तथा भुजंगसङ्गी धूर्त्तसङ्गवान् बहुमुखः सहस्रवदनः भुजङ्गः शेषः तत्सङ्गीति च विहरति ॥ ५२ ॥

ततः कारणात् शतप्रदानप्रतिक्षेपिणः शतदानं प्रतिक्षिपतः विंशतिपञ्चक प्रदानमिव अपहास्यं । महाप्राज्ञस्य महतः अप्राज्ञस्येत्यर्थः ।

मूढेति-॥ मूढग्राह्यान् तद्ग्राहिणः मूढा एवेत्याशयः मोक्षधर्मप्रपञ्चान् मोक्ष-

भोगप्राप्त्यै कल्पतेभूरिभूम्नां
ब्रह्मादीनां ब्रह्मचर्यप्रयासः ॥ ५३ ॥

कर्णं दत्वा, किं ब्रवीतिकश्चित् ।

दाम्पत्यं सहजं समस्तजगतां पित्रोस्तदिच्छावशा
त्कामिन्यादिविभागक्लृप्तिरपि तत्कैंकर्यसिद्ध्यै नृणां ।
इत्थं शेषमशेष मद्यतुभवत्सारस्य संवर्द्धकं
वैरस्यं विदधातिहन्तविदुषां वैरोचनं दर्शनम् ॥ ५४ ॥

( सक्रोधं ) कः कोऽत्रभोः उत्सार्यतामसौ दृष्टिगोचराद्दैष्टिकदिवा
भीत इत्यवज्ञां नाटयति ।

दुर्मतिः—अ-अ उत्तममकिल णिहिलाओ कामिणीओदासीओ, ताहिं
एव तुह विवेअ विअओत्तिसंपअणबहुमाणह्मि ( विचिन्त्य )
पच्चक्खसिद्ध परमाणन्द जुवइ संभोअप्पहाणं तुहसिद्धंतंमु-
अंतोकिंतिठिरप्पहाणेसुते सुतेसुम एसुप उरा अराजणाहोन्ति ।

(छाया) आर्यपुत्र, ममकिल निखिलाः कामिन्योदास्यः, ताभिरेव तवविवेकविजय
इति संपदबहुमानास्मि, (विचिन्त्य) प्रत्यक्षसिद्धपरमानन्दयुवतिसंभोगप्रधानं
तवसिद्धान्तं मुञ्चन्तः किमिति स्थिरप्रधानेषुतेषुतेषु मतेषु प्रचुरादराजनाभवन्ति

धर्मप्रतिपादकप्रबन्धान् निर्मातॄणां ब्रह्मादीनां नियमादयुक्तः अप्रमादेन अनुष्ठितः
ब्रह्मचर्यप्रयासः भोगप्राप्त्यै कल्पते समर्थोभवति ॥ ५३ ॥

एतन्मतमसहमानस्य कस्यचिद्वेदान्तवादिनोमत मनुवदति किंब्रवीति इति—॥

दाम्पत्यमिति—॥ समस्त जगतां पित्रोः पद्मापद्माक्षयोः दाम्पत्यं सहजं
स्वाभाविकं ।

त्वंमाता सर्वलोकानां देवदेवो हरिः पिता ।

इत्यादि स्मृतेः तयोरिच्छावशात् कामिन्यादिविभागक्लृप्तिरपि तद्विषयकैंक-
र्यसिद्ध्यै भवति इत्युक्तेनप्रकारेण अशेषविभूतिद्वयमपितयोश्शेषभूतं अद्य तु भवतः
सारस्य सरसत्वस्य संवर्धकं वैरोचनं चार्वाकदर्शनं विदुषां वैरस्यं विदधाति ॥ ५४ ॥

दैष्टिकः आस्तिकः स एव दिवाभीतः घूकः । स्थिरं अर्चाविग्रहः प्रधानं प्रति-
पाद्यं येषां तेषु समयेषु पाञ्चरात्रादिषु ।

महामोहः—प्रिये अविचारितप्रवृत्तायमास्तिकवेतालानामन्धपरंपरान्यायः

अमरगुरुप्रणीतमनपायमपोह्य मतं
विविधकुतर्कजालकलहायितकौतुकिनः ।
कपिलहिरण्यगर्भकणभोजन बुद्धजिन
प्रमुखसमर्थितेषु समयेषु भजन्तिरतिम् ॥ ५५ ॥

अपि च

चरमितरद्ध्यशेषं चन्द्र-
कनयतस्स्वभावचित्र मिदं ।
किं वानिरूपणीयं कण्टकतै-
क्ष्ण्यादिकारणङ्कविभिः ॥ ५६ ॥

अविचारितः सदसद्विचाररहितः प्रवृत्तः आस्तिकाः अस्ति परलोकादिकमिति शास्त्रप्रामाण्यमभ्युपगच्छन्तः एव वेतालाः पिशाचाः तेषामन्धपरंपरान्यायः । कस्यचिदन्धस्य आदौ पीतश्शंख इति प्रतीतिर्जाता ततो अन्यः तस्मै अन्धाय तथा उपदिशति सोप्यन्यस्मै तथा सचान्यस्मै एवं इत्येतेषामन्धानां पीतश्शंख इति बुद्धिरविशिष्टा भवति अयमेव अन्धपरंपरान्यायः ।

अमरेति—॥ अमराणां गुरुः वागीशः तेनप्रणीतमनपायं अपायरहितं मतमपोह्यविविधाश्चते कुतर्काश्च तेषां जालं तेन कलहायिते कलहवदाचरिते कौतुकिनः इच्छावन्तः कपिलस्सांख्यप्रकाहिरण्यगर्भः योगप्रवर्तकः कणभोजनः कणादः बुद्धो जिनः प्रमुखाः प्रधानाः येषां तेतत्प्रमुखाः पाशुपताः तेभ्यस्समुत्थितेषु समयेषु रतिं प्रीतिं भजन्ति । कपिलादि समयानां युक्तिवैधुर्येपि केषांचिदन्धपरंपरान्यायेन तेष्वादर इति भावः ॥ ५५ ॥

जगद्वैचित्र्यस्य स्वभाविकत्वात् समयवैविध्यं तत्र तत्र केषां चिदादरश्च युज्यत इत्याह अपि चेति—॥

चरमिति—॥ चरं जङ्गमं इतरत् स्थावरं इदमशेषमपि चन्द्रकनयतः चन्द्रकं यथा स्वभावत एवचित्रं तन्न्यायेन स्वाभवचित्रं स्वाभाविकस्य कारणनिरूपणञ्चन युक्तमित्याह किं वेति । कविभिः बुद्धिमद्भिः कण्टकतैक्ष्ण्यादेः कारणं निरूपणीयं किं वा अनिरूपणीयमेवेति भावः आदिशब्देन पावकौष्ण्यादीनां ग्रहणं । तदुक्तं भगवता पराशरेण ।

इत्थं नामदुस्त्यजस्स्वभाववादः, कार्यकारणभावश्च काकतालीय-न्यायमनुसरति एवमपि ।-

अतत्तदितिवानतत्तदितिवा वृथोद्यत्कथा
कनत्कथककत्थनक्रमविकल्पितप्रक्रमा ।
जगद्विपरिवर्तिनीजनपदेषु जोघुष्यते
कुतर्कशतशर्करानिकरकर्कशापद्धतिः ॥ ५७ ॥

इत्थमुपप्लुतेपि जगति ।

चिरसेवनतोषितेन धाम्ना
निपुणस्थानविदानिवेदितार्थः ।
असुरोपनिषद्रहस्यमद्यं
प्रथयामासविरोचनः प्रजानाम् ॥ ५८ ॥

---

शक्तयस्सर्वभावानां अचिन्त्यज्ञानगोचराः ।
यतोतो ब्रह्मणस्तास्तु सर्गाद्याभावशक्तयः ॥
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता इति ॥ ५६ ॥

तत्तद्वैचित्र्यस्य स्वभाव एव निमित्तमितिवादः दुस्त्यजः ननु तन्तुगतशौक्ल्यादेः पटगतशौक्ल्यादिकारणत्वं दृश्यते तत्कथं स्वाभाविकत्वमुच्यत इत्यत्र आह कार्येति ॥ क्वचित्काकागमनेन तालफलं पतति नतावता सर्वदातालफलपतनस्य काकागमनं हेतुः एवं कार्यकारणभावश्च कादाचित्क इति भावः ॥ एवमपि युक्तिशून्याप्यास्तिकवेतालानां सरणी दुर्वादिविकत्थनव्रंधिता जोघुष्यत इत्याह-॥

अतदिति-॥ केन चिद्वादिना इदमतत् तचभवतीत्युक्ते प्रतिवादिना तदित्युच्यते केनचित् यच्च सत् तत्स्वभावं नेत्युक्ते अन्येन तत् तत्स्वभावमित्युच्यते । आद्यं स्वरूपपरं द्वितीयं स्वभावपरं एवं वा एवं वा वृथा उद्यन्त्यां कथायां कनतां सोत्साह तया प्रकाशमानानां कथकानां विकत्थनक्रमैः असंबद्धप्रलापपरंपराभिः विकल्पितः विरुद्धतया कल्पितः प्रक्रमो यस्यास्सा तथा जगतां विपरिवर्तिनी संमोहजननीकुतर्कशतान्येव शर्करानिकराः क्षुद्रोपलनिकराः तैः कर्कशा पद्धतिः वैदिकमार्गः जनपदेषु जोघुष्यते भृशं घुष्यते ॥ ५७ ॥

उपप्लुते पीडितेसति ।

चिरेति-॥ चिरं सेवनेन उपासनेन हेतुनातोषितेन निपुणं यथाभवति तथा

अत्र च ।

करणविलयरूपा मुक्तिरित्युक्तमाद्यै
वितथमिति मयाऽन्यद्वार्तिके विन्यवेशि ।
स्तनयुगलबृहत्त्वस्थापनीयस्वभूम्ना
बहुगुणविभवेन ब्रह्मणाभोगसाम्यम् ॥ ५९ ॥

दुर्मतिः—अ अ अउत्त एव्वं तुम्हेहिं रक्खिज्जन्तं जीअलोअं पीडन्ति णिक्का-
रणविद्दैसा परसिध्धन्त परिवाडीपक्खपडिआ ।

महामोहः—भवतु किंचिच्छिन्नं न खलु पाटच्चराः प्रकृतिं मुञ्चन्ति, न चा-
प्रमत्तमतयस्तैरुपहन्यन्ते ।

पठन्तस्त्रय्यन्तान्परिहसनकाकुं विदधतां
भजन्तस्ताटस्थ्यं परिभवितुमिच्छन्तु महतः ।
उदन्तश्शान्तानामयमिति च जल्पन्त्वभिमतं
किमन्तर्दुर्दान्तैः कृपणकथकैरेभिरिह नः ॥ ६० ॥

(छाया) आर्यपुत्र एवं युष्माभीरक्ष्यमाणं जीवलोकं पीडयन्ति निष्कारणविद्वेषाः परसिद्धान्तपरिपाटीपक्षपतिताः--

स्थानविदा अत्यन्तप्रतिष्ठाविदा धात्रा निवेदितार्थः उपदिष्टतत्वः यमसुरोपनि-
षदां रहस्यं विरोचनः प्रजानां प्रथयामास प्रकाशितवान् अनेनास्य प्राबल्यमुक्तं ॥५८॥

करणेति—॥ आद्यैः जरच्चार्वाकैः करणविलयरूपाकरणं देहेन्द्रियादिः तद्विलय एवमुक्तिरित्युक्तं तद्वितथमिति मया अन्यदेव मुक्तिरिति वार्त्तिके विन्यवेशिस्थापितं ।

स्तनेति—॥ स्तनयोः युगलस्य बृहत्वेन स्थापनीयः स्वभूमा यस्य तेन बहुगुणः विभवो यस्य तेन ब्रह्मणाभोगसाम्यं ॥ ५९ ॥

पाटच्चराः चोराः । प्रकृतिं स्वभावं न मुञ्चन्ति खलु । अप्रमत्तमतयः तैर्नाप-
हन्यन्ते च प्रमत्तास्तु अपहन्यान्तां नामेति आशयः । एतेतावत् यथेच्छं कुर्वन्तु नतैर
स्माकं हानिरित्याह ।

पठन्ति इति—। त्रय्यन्तान्पठन्तः परिहसनकाकुं परिहसन प्रकारान् विदधतां कुर्वन्तु ताटस्थ्यं माध्यस्थ्यं भजन्तः महतः परिहसितुमिच्छन्तु अयं शान्तानामुदन्त इत्यभिमतं स्वाभिमतं यत्किञ्चित् जल्पन्तु अन्तर्मनसि दुर्दान्तैः कृपणैः स्वाभिमतार्थकलुब्धैः कथकैः एभिः नः अस्माकं किं न किंचिदपीत्यर्थः ॥ ६० ॥

(विचिन्त्य) प्रिये अद्यतावदस्मत्सिद्धान्तपुनःप्रतिष्ठापनपटीयांसः पुरुषा गवेषणीयाः, कः कोऽत्र भोः—

(दम्भादयः) त्वरितमुपसृत्य, अमी वयमागता इत्युपसीदन्ति ।

महामोहः—(स्वगतं) स्वकुलहितैषिभ्यो भवद्भ्यः ।

दम्भदर्पौ—सप्रश्रयं, महाराजत्वत्प्रसादात्सर्वत्राप्रतिहतगतयस्समागतास्मः, किङ्कर्तव्यमनेन किङ्करजनेन ।

महामोहः—कामादीनामिदानीं का वार्त्ता ।

दम्भः—(स्वगतं) किं राज्ञे विज्ञापयामि । (प्रकाशं) देवदुर्मतिवल्लभ "सत्यं राजसुशोभत," इति प्रियेतरदपि दृष्टं ब्रवीमि वेद्मि कामस्य लोभस्य चाहमधुनातनीमवस्थां, तयोश्च ।

अनन्तविषयस्पृहाजलधिसंप्लुते मानसे
वसन्तसमये स्थिते मलयमारुते जीवति ।
सकृद्विहितसौप्तिकप्रतिनिवृत्तिवैलक्ष्यतः
प्रसुप्त इव हन्त न स्पृशति पञ्चबाणश्शरान् ॥६१॥

---

अद्यतावत् अद्यैव अस्मत्सिद्धान्तस्य चार्वाकमतस्य पुनः प्रतिष्ठापने पटीयांसः समर्थाः पुरुषाः गवेषणीयाः अन्वेषणीयाः । दम्भादयः इत्यादिशब्देन दर्पकुहनासूया गृह्यन्ते । अप्रतिहता अप्रतिरुद्धा गतिर्येषां ते तथा । अनेन किंकरजनेन किंकरैः अस्माभिरित्यर्थः ।

कावार्ता कोवृत्तान्तः ।

विज्ञापयामि किं । प्रियादितरत् प्रियेतरत् अप्रियमपि दृष्टं ब्रवीमि । न ब्रूयात्सत्यमप्रियं इत्यस्यापवादः । सत्यं राजसुशोभते इत्येतत् । अधुनातनीं इदानीं वर्त्तमानां तयोश्चमध्य इति शेषः ।

अनन्तेति ॥ मानसे अनन्तानां असंख्यानां विषयाणां शब्दादीनां स्पृहैव जलधिः तेन संप्लुतेऽपति आप्लुते सति वसन्तसमये स्थिते सति मलयमारुते जीवति सति सकृदेकदा विहितसौप्तिकस्य प्रतिनिवृत्तिः व्यावृत्तिः तज्जन्यं यद्वैलक्ष्यं व्रीला तस्मात् पञ्चबाणः प्रसुप्त इव शरान्न स्पृशति ॥ ६१ ॥

अन्यस्मिन्नपि कैमुत्यसिद्धमावेदयामि ।

पुरुषस्य विवेकविप्रलम्भात्
स्वशरीरेपि विरम्यमानबुद्धेः ।
कृपण प्रतिनन्दनीयवृत्तिः
किमिवालम्बनमाश्रयेतलोभः ॥ ६२ ॥

दर्प :—देव दुर्मतिपण्डित, अहं पुनः क्रोधस्य सांप्रतिकीमवस्थिति मद्राक्तं "याथातथ्येन पण्डित"मिति नीतिमनुसरन्यथानुभूतमेवावेदयामि॰ यथासौ ।

द्विसप्तदलपत्रलद्रुहिणसृष्टिभङ्गक्रिया
पुरस्कृतयुगत्त्रयभ्रुकुटिताण्डवाडम्बरः ।
विरक्तिविषवल्लरीव्यतिकरेणरोषस्स्वयं
सुषुप्त इववर्त्तते सुभटकेलि सौवस्तिकः ॥ ६३ ॥

विषादे अन्यस्मिन् लोभेपि कैमुत्यं कैमुत्यन्यायसिद्धं किन्तदित्यत आह ॥

पुरुषस्येति—॥ विवेकविप्रलंभात् विवेककृतवञ्चनायाः हेतोः स्वशरीरेपि विरम्यमाण बुद्धेः पुरुषस्य कृपणैः कदर्यैः प्रतिनन्दनीया वृत्तिर्यस्य सतथा लोभः किमिव आलम्बनमाश्रयेत भजेत । स्वदेहेपि विरक्तस्य पुरुषस्य वशीकरणेनकथिच दवकाशो लोभस्येति भावः ॥ ६२ ॥

साम्प्रतिकीं सम्प्रति वर्त्तमानामवस्थितिं अवस्थां । राज्ञः पुरतः कथमप्रियं वक्तव्यं इत्याशङ्क्य आह याथातथ्येति—॥ याथातथ्यं यथातथात्वं तेन यथाभूतं वस्तुस्थिति मनतिक्रम्य असौलोभः यथावर्तते तथा कथयामीति शेषः । तदेवाह—

द्विसप्तेति—॥ द्विसप्तदलैः चतुर्दशभुवनैः पत्रलायाः संजातपत्रायाः द्रुहिण सृष्टेः चतुर्मुखसृष्टेः भङ्गक्रियया पुरस्कृते पुरोनिहिते युगत्रये प्रवृत्तो भ्रुकुटिताण्डवा डम्बरः भ्रूभङ्गताण्डवसंरम्भो यस्य स तथा चतुर्दशभुवनात्मक ब्रह्माण्डभङ्गस्य क्रोधभ्रुकुटीसंरम्भः पूर्वभावीत्यर्थः सुभटानां महाशूराणां केलेः पराक्रमस्य सौव स्तिकः स्वस्तिवाचकः रोषेण किलशूराणां पराक्रमप्रकर्षः एवं भूतोरोषः विरक्तिरेव विषवल्लरीविषलतातस्याः व्यतकरेण संपर्केण प्रसुप्त इव वर्तते निश्चेष्टो वर्तत इत्यर्थः ॥ ६३ ॥

महामोहः–सविषादं विहस्य । अहोविवेकस्य कुलघातिनोदुर्मन्त्रित-मेतत् यथा ऽसौ सर्वत्र निरवकाशस्स्यात् तथास्माभिरवहितै र्विश्वमिदमधर्मेण व्यापनीयं, स्वकुलसंरक्षण प्रवृत्तानामस्माकं-त्वयमधर्म एव धर्मः, पठन्ति चैतिहासिकाः "स एव धर्म-स्सोधर्मस्तंतंप्रतिनरं भवेत्, इति" एवमुपप्लुतावस्थानो विवे-कस्स्वयञ्चानति प्रबलस्सुखेन साधनीयः, अथवाकोयं विवेकः, नखलुशाकुटस्यलवने शङ्कुलायाः कियानिवभारः, न चेषीक-तूलमिन्धनयितुंवह्निनासरभ्यते, (विमृश्य) प्रियेकुलधर्मपा-लिनि त्वदभिमतवृत्तेरुत्तमगुणस्यमेपश्ययावज्जीवं प्रारब्धक-र्मापरित्यागं ।

कामस्ताम्यतुकोपलोभसहितः कालेसमभ्येतुवा
रक्षस्संयति राघवस्थितिमहं व्यङ्क्ताविवेकाहवे ।
कालस्त्वेषरथो भवत्विह कलिस्त्वं सारथिर्दुर्मते
दम्भस्संप्रतिजैत्रदुन्दुभिरसौदर्पस्तथाकङ्कटः ॥६४॥

अप्रियश्रवणेन विषादः तद्गूहनार्थं हासः । कुलघातिनः कुलघ्नस्य व्यापादनीयं विनाश्यं । कथमधर्माचरणमित्यत आह स्वकुलेति–। अधर्मस्य धर्मत्वे ऐतिहा-सिकं वचनं प्रमाणयति पठन्ति च इति ऐतिहासिका इतिहासनिष्ठाः किंतद्वचनमित्यत आह स एवेति–॥ नरंनरं प्रति स एव धर्मः स एव अध-र्मश्च भवेत् । अधिकारिभेदायत्ताधर्माधर्म व्यवस्थेति भावः उपप्लुतं उपद्रुतं अवस्थानं स्थितिः यस्य स तथा स्वयं चानतिप्रबलः अस्मदपेक्षयेति भावः । साधनीयः जेयः अयं विवेकः कः किंवीर्यः । शाकुटस्य शाकविषस्य शङ्कुलायाभारः कियान् नाल्योपि-इत्याह इत्यर्थः । इषीकतूलं इन्धनयितुं इन्धनं कर्तुं दग्धुं वह्निना संरभ्यते संरम्भः न क्रियते । प्रारब्धस्य कर्मणः कार्यस्य अपरित्यागमेव आह ॥

काम इति–॥ कोपलोभसहितः कामः ताम्यतुतान्तोभवतुवा काले युद्धकाले समभ्येतु वा असौ विवेकाहवे विवेकेन युद्धे रक्षस्संयति राक्षसयुद्धे राघवस्थितिं-व्यङ्क्ता व्यक्तीकरिष्यामि । राघवः स्थैर्येण स्थित्वाराक्षसानवधीत् तथाहमपिस्थित्वा-विवेकादीन् हनिष्यामीत्यर्थः । इहयुद्धे कलिः कालोरथोभवतु त्वं सारथिर्भवेरिति शेषः । संप्रति दम्भः जैत्रदुन्दुभिः दर्पः कंकटः कवचः ॥ ६४ ॥

दम्भः—महाराज स्वायत्तसिद्धेस्तवकिमायत्तमस्मासु ।

कस्तुभ्यं रणरङ्गखेलन कलामातिष्ठतेतिष्ठते
कश्चप्रेप्सति कामतन्त्रनियतस्वैरायवैरायितं ।
येन क्षोदयितुं क्षमांप्रभवति क्षेप्तुंकुलक्ष्माभृतः
पातुं सप्तसरस्वतोपि भवतासाकूतमालोकितः॥६५॥

तथापि वयं त्वदाज्ञप्तास्त्वदधीनवृत्तयोयथासामर्थ्यंयतिष्यामहे, कपयोपि काकुत्स्थस्योपकुर्वन्ति, वल्लवाअपिवासुदेवस्यसाह्यमवलम्बन्ति।

महामोहः—अभिमतमेव युष्माकमहमादिशामि ।

दम्भत्वमद्यनियतो निजधर्मगुप्त्यै
पुण्यापगापरिसरान्पुनराश्रयेथाः ।
गाढोपलक्षितविरक्तिमदेषुगर्व-
स्तन्वीतवासमनघेषु तपोवनेषु ॥ ६६ ॥

---

स्वायत्ता स्वाधीनासिद्धिः कार्यसिद्धिः यस्य तस्य तव अस्मासु सचिवेषु किमायत्तं न किंचिदपीति भावः ।

स्वायत्तसिद्धिः सचिवायत्तसिद्धिश्चेति द्विविधो राजा । तत्र स्वायत्तसिद्धेः सचिवायत्तसिद्धित्वा भावं विशदयति ॥

क इति—॥ रण एवरङ्गं तस्मिन् खेलनकलां क्रीडनविद्यां आतिष्ठते कुर्वते तुभ्यं कः कोवातिष्ठते आत्मानं प्रकाशयन् तिष्ठति । कामतन्त्रे कामशास्त्रे नियतः स्वैरः स्वच्छन्दविहारः यस्य तस्मैतुभ्यमित्यनुषङ्गः यश्च वैरायितं वैरवदाचरितं विरोधं प्रेप्सति प्राप्तुमिच्छति येन भवता साकूतमालोकितः पुरुषः क्षमां भूमिङ्क्षोदयितुं घूर्णयितुं कुलक्ष्माभृतः कुलपर्वतान्क्षेप्तुं उन्मूलयितुं सप्तसरस्वतः सागरान् पातुमपि प्रभवति शक्नोति ॥ ६५ ॥

तथा तेन प्रकारेणत्वया आज्ञप्ताः त्वदधीनात्वदायत्तावृत्तिः येषां तत्तथा यथासामर्थ्यं सामर्थ्यं सामर्थ्यमनतिक्रम्य स्वनैच्यं तन्महत्तां च दृष्टान्तद्वयेन विशदयति कपयोपीति—॥ युष्माकमभिमतमेव दिशामि किन्तदित्यत आह—

दम्भेति—॥ निजधर्मस्य दम्भवर्धनस्य गुप्त्यै गाढं यथा भवति तथा उपलक्षितः दृष्टः विरक्तः मदः येषु तेषु तपोवनेषु वासंतन्वीततनोतु ॥ ६६ ॥

दम्भदर्पौ—स्वीकृतोयं स्वामिसमादेशइति सभार्यौनिष्क्रान्तौ-

महामोहः—( स्वगतं ) क्रिवामारातिविहतावाद्यं साधनं ननुप्रत्यवमृष्टं

प्रज्वलतिजाठराग्नौ चिपन्यथावचातुर्विध्यं हव्यं ।
प्राणाग्निहोत्रमेकं परिपालयितास्मिदुर्मतिसहायः ॥६७॥

ततश्चजात्याश्रयनिमित्तदुष्टैरिष्टैरेवद्रव्यैर्मृष्टाहारविहारेदृष्टचेष्टे पुरुषेकथमिव विवेकस्य विजयाशंसा ।

प्रकाशं ।

अलंमेरुस्तोमैरलमपिचकैलासनियुतै-
रलं द्वीपैरष्टादशभिरखिलैर्वापिभुवनैः ।
अखण्डैर्ब्रह्माण्डैरपिनखलुतृप्तिर्भवतिमे-
विरुन्धानध्वंसन्त्व भिनिविशते संप्रतिमनः॥६८॥

---

अरातीनां विहतौ नाशे आद्यं साधनं किं नामेति विचारः । जात्याश्रचनं ननु प्रत्यवमृष्टमिति प्रत्यवमर्शः प्रत्यभिज्ञा ।

किंतदित्यतः आह-॥

प्रज्वलतीति-॥ प्रज्वलति दीप्यमाने जाठराग्नौ चातुर्विध्यं लेह्यचोष्य खाद्यपेयरूपेण चतुः प्रकारं हव्यं यथा वा उक्तमार्गेणक्षिपन्सन् एकं प्राणाग्निहोत्रं प्राणादिविषयमग्निहोत्रं परिपालयितास्मि ॥ ६७ ॥

अनेन अग्निहोत्रपरिपालनेन किंभविष्यतीत्यत आह ततश्चेति-॥

ततः अग्निहोत्र परिपालनात् जात्यादुष्टानि कलञ्जादीनि आश्रयदुष्टानि अशुचिस्थल जातानि निमित्ततोदुष्टानि एकादश्युपरागादि निमित्ततो निषिद्धानि द्रव्याणि इष्टैः अभिमतैः द्रव्यैः मृष्टौ पूर्णौ आहारविहारौ यस्य तस्मिन् विहार शब्दोत्र विसर्गपरः मृष्टान्नं प्रतिहता चेष्टा यस्य तस्मिन् पुरुषे एवं भूते सति कथ-मिवविवेकस्य विजयाशंसा विजयेच्छाजात्याश्रय निमित्तात् दुष्टादन्नात् कायशुद्धि-र्विवेक इत्यस्य विरोधित्वात् एतदा चास्य विवेकस्य विजयाशंसा नास्त्येवेतिभावः ।

स्वाभिप्रायमाह-।

अलमिति-॥ मेरूणां हेमाद्रीणां स्तोमैः कैलासानां रजत गिरीणां नियुतैः अष्टादशभिः द्वीपैः अखिलैरपि भुवनैः अखण्डैः अशेषैः ब्रह्माण्डैरपि मेतृप्तिर्नभवति भवतिखलु नैतेषु मम मनो निविशते अपितु संप्रति विरुन्धानस्य शत्रोः ध्वंसं

दुर्मतिः—* अमच्चा एव्व पुणो अराइविध्धंसणे पेसणेण अणुग्गहणिज्जा ।

महामोहः—प्रिये कृत्याकृत्यवेदिनीखल्वसि अहमपि तथामन्त्रयामि-
तदाहूयतामन्तःपुरेकश्चिदन्तरङ्गपरिजनः ।

दुर्मतिः—† हला दुव्वासणे इदोहोहि ।

ततः प्रविशति दुर्वासना ।

दुर्वासना—‡ एसाहं उवठ्ठिअह्मि आणवेउमहाराओ रण्णीअ ।

महामोहः—भद्रे ब्रूहि मद्वचनादधिगतगणितविद्यान् करणाधिकारिणः
आदिशति भवतो महाराजाधिराजपरमेश्वरो दुर्मत्यासह
महामोहः, कामक्रोधलोभमदमात्सर्यदम्भस्तंभेभ्यस्सप्तभ्य-
स्सचिवेभ्यस्सप्रमुक्तिक्षेत्रतया प्रसिद्धाराजधान्यस्ससागराश्च-
सप्तमहाद्वीपादत्तामहामोहेनेति लिख्यतां ।

* अमात्यएव पुनरराति विध्वंसने प्रेषणेनानुग्रहणीयाः—
† सखि दुर्वासने इतोभव ।
‡ एषाहं उपस्थितास्मिआज्ञापयतुमहाराजो राज्ञीच ।

अभिनिविशते मेर्वादिभ्यस्सर्वेभ्योपि शत्रुवधएव ज्यायस्त्वेन अभिमत इति भावः ॥ ६८ ॥

अमात्या एव पुनरराति विध्वंसने प्रेषणेन अनुग्रहणीयाः ।

मन्त्रयामि मन्ये । अन्तः पुरेवर्तमानः कश्चिदन्तरङ्गजनः ।

अगणिता अविज्ञाना गणितविद्यागणितशास्त्रं यैस्तान् करणाधिकारिणः गणकान् ब्रूहि किमित्यत आह आदिशतीति—॥ महाराजानां अधिपती राज्ञां परमेश्वरः उत्कृष्टशास्ता कामादिभ्यस्सप्तभ्यस्सचिवेभ्यः मुक्तिक्षेत्रतया प्रसिद्धाः सप्तराजधान्यः अयोध्यादिकाः ससागराः सप्तद्वीपाश्च महामोहेन दत्ता इति विलिख्यतां ।

अत्रसप्तराजधान्यः ।

अयोध्या मथुरा माया काशीकाञ्चीह्यवन्तिका ।
पुरी द्वारवती चैव सप्तैता मुक्तिदायिकाः ॥

इत्युक्ताः । सप्तद्वीपास्तु ।

अपि च ।

स्वकीयाख्यामात्रच्छुरणपरिणह्यद्भयभरान्-
बहिष्कृत्येदानीं विजहदधिकारान्क्रतुभुजः ।
यदृच्छावाक्येपि व्यवहरतु लोकोयमखिलो
नमस्स्वस्तिस्वाहा स्वधमिह महामोहविषयं॥६६॥

इति ।

दुर्वासना-* जं आणवेदि भट्टाभट्टिणीअ्।

इति निष्क्रान्ता ।

नेपथ्ये—विजयतां देवः ।

भुक्तिक्षमं समयमेकरुचिं वितन्वन्-
पुंसान्निजप्रतपनेन गतिप्रतीपः ।

* यदाज्ञापयति भर्ताभर्त्री च—

जंबुप्लक्षरुचयौ द्वीपौ शल्मलिश्च अपरोद्विज
कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः ॥

इत्युक्ताः । सप्तसागरास्तु ।

एतेद्वीपाः समुद्रैस्तु सप्तसप्तभिरावृताः ।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलैस्समं ॥

इत्युक्तं । अन्यदप्याह अपिचेति-॥

तत्किमित्यत आह-॥

स्वकीयेति-॥ स्वकीयाख्यामात्रस्य स्वशब्दो महामोहपरः महामोह इति नाममात्रस्य च्छुरणेन संपर्केण परिणह्यन् विपुलीभवन् भयभरो येषां तान् विजहदधिकारान् प्रतिमन्वन्तरं जहदधिकारान् क्रतुभुजः देवान् बहिष्कृत्य विहाय अखिलोयं लोकः यदृच्छावाक्ये अबुद्धिपूर्वव्यवहारे नमस्स्वस्तिस्वाहाशब्दान् महामोहविषयान् व्यवहरतु महामोहाय नमः महामोहाय स्वस्ति महामोहायस्वाहेति लिखतु इतिलिख्यतामिति पूर्वेणान्वयः ॥ ६६ ॥

यदाज्ञपयतिभर्ता भट्टिनी च ।

नेपथ्ये वैतालिकः । विजयतां देवइत्युक्त्वा सूर्यस्य महामोहेन साम्यं वदति ।

भुक्तीति-॥ भुक्तिः भोजनं भोगश्च तत्क्षमं तद्योग्यं एका मुख्या रुचिः प्रीतिः

आशाविशेषमपरं प्रतिपत्स्यमानो
मोहेश्वर त्वमिव भाति मयूखमाली ॥ ७० ॥

इह च ।

उपहरति सूपकर्ता
महतो मोहस्य दुर्मतिप्रेष्यः ।
बलरिपुवरुणगृहाभ्यां
स्वाद्यं धारान्तमुचितमाहारम् ॥ ७१ ॥

महामोहः–( कर्णं दत्वा ) प्रियेप्राणशब्दाभिलप्यानां सर्वशरीरव्यापिनीनां सर्वसिद्धान्तसंमतानां देवतानां समर्चन समयमावेदयति वैतालिकः तत्प्रविशावश्शुद्धान्तम् इतिनिष्क्रान्तौ ।

---

कान्तिश्च यस्य तं समयं सिद्धान्तं कालं च वितन्वन् निजेन प्रसवेन प्रतापेनातपेन च पुंसां गतेः सन्मार्गस्य गतागतिरूपायाः च प्रतीपः । अपरमन्यं पश्चिमं च आशायाः इच्छायाः दिशः च विशेषं प्रतिपत्स्यमानः मयूखमाली सूर्यः त्वमिवभाति ॥ ७० ॥

इह अस्मिन्समये च ।

उपहरतीति–॥ सूपकर्तासूदः दुर्मतेः प्रेष्यः बलरिपु वरुणयोः गृहाभ्यां पञ्चमीद्विवचनं इदं स्वाद्यं स्वादिर्यस्यतं धकाररेफौ अन्तौ चरमौ यस्यतं उचितं योग्यं आहारं महतो मोहस्य उपहरति आनयति बलरिपु गृहात् सुधां वरुणगृहात् सुरांच उपहरतीति भावः ॥ ७१ ॥

प्राणशब्दाभिलप्यानां प्राणशब्दवाच्यानां सर्वैस्सिद्धान्तैस्संमतानां देवतानां प्राणापानव्यानोदानसमानानां येषां प्राणशब्दाभिलप्यत्वं प्राणस्य पञ्चवृत्तित्वादुपपन्नं सर्वशरीरव्यापित्वंच ।

हृदि प्राणो गुदेपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ॥

इत्युक्तं । समर्चनसमयं समर्चनवेलां आवेदयति शुद्धान्तमन्तःपुरं ।

इति सङ्कल्पसूर्योदयव्याख्यायां प्रभावल्यां पञ्चमोऽङ्कः ।

श्रीमते वेदान्तगुरवे नमः ।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु सङ्कल्पसूर्योदये डम्भाद्युपालम्भोनाम पञ्चमोङ्कः ।

श्रीमते भगवते भाष्यकारायमहादेशिकायनमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।



श्रीअम्बिकाचरणचक्रवर्त्ति द्वारा काशी महामंडल शास्त्रप्रकाशक समिति यन्त्रे मुद्रित ।